THE

PRINCESS OF WALES

SARASVATĪ BHAVANA TEXTS

No. 79

( PART I )

---

THE

# TAUTĀTITAMATATILAKA

( PART I )

---

GOVERNMENT SANSKRIT LIBRARY,

BENARES



---

Price, Rs.1-12-0]

Saleable at half the printed price.

श्रीभवदेवविरचितं

# तौतातितमततिलकम्

प्रथमाध्यायात्मकः प्रथमो भागः

THE

# TAUTĀTITAMATATILAKA

BY

S'RĪ BHAVADEVA

( PART I )

CRITICALLY EDITED WITH NOTES

BY

Vedaviśarada Mīmāṁsā Kesarī
Pandita Sarvabhauma
Pandit A. CHINNASWAMI SASTRY
Principal, S. V. S. College, Tirupati
and
Mimamsa Sahityacharya
Pt. PATTABHIRAMA SASTRI
Professor of Mimāmsa
Benares Hindu University
Benares.

1939.

(c) Theism in Ancient India, by Gopintha Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamal Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N. Pātankar. Rs. 5.

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅgānātha Jha.

(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda-Prātiśākhya, by Maṅgala Deva S'āstrī.

(d) Nārāyaṇa's Gaṇita kāumudi, by Padmākara Dvivedi.

(e) Food and Drink in the Ramayanic Age, by Manmatha natha Roy.

(f) Satakāryavāda: Causality in Sāṅkhya, by Gopinatha Kaviraj

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the Origin and Expansion of the Aryans. by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools, by G.L. Sinha. Rs5.

Vol. V—

(a) Ancient Home of the Aryans and their migration to. India by A. C. Ganguly.

(b) A Satrap Coin, by Shyamalal Mehr.

(c) An Estimate of the Civilisation of the Vanaras as depicted in the Rāmāyaṇa, by Manmatha nātha Roy.

(d) A Comparison of the Contents of the Ṛgveda, Vajasaneya, Tattirīya & Atharvaveda Prātiśākhyas, by Maṅgala Deva S'āstri

(e) Doctrine of Formal Training and the Ancient Indian Thought, by G. L. Sinha

(f) History and Bibliogrphy of Nyāya Vaiśeṣika Literture. by Gopinath Kavirāj.

(g) A Descriptive Index to the names in the Rāmāyaṇa, by Manmath nāth Roy.

(h) Notes and Queries, (1) Virgin Worship, by Gopinath Kaviraj. Rs. 5

Vol. VI—

(a) Index to S abara's Bhāṣya, by the late Col. G A. Jacob.

(b) Some Aspects of the History and Doctrines of the Nāthas by Gopinath Kaviraj.

(c) An Index to the Ramayana, by Manmathnāth Roy.

(d) Studies in Hindu Law by M. M. Gaṅganath Jha.

(e) The Mimansa manuscripts in the Govt. Sanskrit Library ( Benares ), by Gopināth Kavirāj.

(f) Notes and Queries. by Gopināth Kavirāj Rs. 5

Vol. VII.

(a) Bhāmah and his Kāvyālaṅkār, by Baṭuknāth S'armā and Baldev Upādhyāya.

(b) Some variants in the readings of the Vaiśeṣika Sūtras, by Gopināth Kavā5ṛrj

(c) History and Bibliogrphy of Nyāya Vaiśeṣik Literature, by Gopinātha Kavirāj.

(d) An attempt to arrive at the correct meaning of some obscure Vedic words, by Sītāram Joshi.

(e) A comparison of the c ntents of the Rga Veda, Vajasneya Taittiriya, and Atharva Veda ( Chāturdhyāyika ) Prātiśākhyas, by Mangal Deva Shāstri.

(f) An Index to the Rāmāyaṇa, by Manmath Nāth Roy.

(g) An Index to S'abara's Bhāṣya, by the late Col. J.A. Jacob

(h) Gleanings from the Tantras, by Gopinātha Kavirāj.

(i) The Date of Madhusudana Sararswati, by Gopinātha Kavirāj.

(j) Descriptive notes on Sanskrit Manuscripts, by Gopinātha Kavirāj.

(k) A note on the meaning of the word Parārdha, by Umeśa Miśra. Rs. 5

Vol. VIII.

(a) Indian Philosophy, by Tārakanatha Sanyal.

(b) An Index to the Rāmāyaṇa, by Manmatha Nath Roy.

(c) Index to Sabara's Bhāṣya, by the late Col. J. A. Jacob.

(d) Hari Svāmi, the commentator of S'atapatha Brāhmana and the date of Skanda Svāmi the commentator of the Ṛgveda, by Mangaladeva S'āstri.

(e) Mystism in Veda, by Gopināth Kaviraj.

(f) The Deva dāsī: a brief history of the Institution, by Manmath Nātha Roy. Rs. 5

Vol. IX.

(a) The Life of a Yogin, by Gopinätha Kavirāj.

(b) On the Antiquity of the Indian Art Canons by Haridas Mitra.

(c) Prāchya Vargīkarana Paddhati by Satisha Ch. Guha.

(d) Yoga Vāsiṣtha and some of the minor Upanishads by B. L. Atreya.

(e) An index to the proper names occuring Valmiki's Rāmāyaṇa by Manmath Nath Roy.

(f) The Philosophy of Tripurā Tantra by Gopinath Kaviraj.

(g) Notes on Pāśupata Philosophy by Gopinath Kaviraj. Rs. 5

Vol. X—

(a) A Short Note on Tattvasamāsa, by Gopināth Kaviraj.

(b) History of the Word Īśvara and its idea, by Mangal Deva Shastri.

(c) Sports and Games as referred to in Sanskrit Literature, by Anant Shastri Phadke.

(d) Objects of Offerings in the S'rauta sacrifices, by A. Chinnaswami Shastri.

(e) Agriculture in the Vedas, by S. N. Jharkhandi.

(f) an Enquiry into the Nature of speech, by Haran Chandra Bhattacharya.

(g) Deities and Objects of Offerings in the S'rauta Sacrifices, by Bhagavat Prasad Mishra.

(h) A Comparison of the Ṛgveda-Pratiśākhya with the Pāṇinian Grammar, by Mangala Deva Shastri.

(i) Kīrti Kaumudi and its Author, by Santimoy Banerjee.

(j) The S'akti Sûtra Ascribed to Agastya, by Mangala Deva Shastri.

---

॥ श्रीः ॥

# भूमिका

अथमिदानीं 'तौताततिमततिलकस्य' पूर्वमीमांसाधिकरणप्रस्थानग्रन्थस्य प्रथमाध्यायरूपः प्रथमो भागः सम्मुद्य प्रकाशं नीयते समेषामपि विदुषां परितोषाय । ग्रन्थोऽयमद्ययावत् क्वाऽप्यप्राप्तप्रकाश इदंप्रथमतयैव प्रकाश्यते । विधिरसायन-मयूखमालिका-मीमांसाकौस्तुभादीनां श्रीमदप्पय्यदीक्षित-सोमनाथ-खण्डदेवादिभिरारचितानां ग्रन्थानामध्ययनाध्यापनादिसमये तत्र तत्र '[1]भवदेवेनोपपादितत्वात्' '[2]भवदेवस्तु' 'अत्र[3] भवदेवः' इति भवदेवनामोल्लेखनमात्रं पश्यन्तोऽपि वयं कोऽयं भवदेवः, कश्चाऽसावेतन्निर्मितो ग्रन्थ इत्येतद्विषयेऽनभिज्ञा एव तत्त्वाधिजिगमिषवः तदन्वेषणतत्परा एवाऽऽस्म । गच्छति च कियति चन काले प्राचीनग्रन्थान्वेषणप्रकाशनादावतिमात्रबद्धपरिकराः संस्कृतसाहितीजीवातवो वाराणसीस्थराजकीयसंस्कृत महाविद्यालयाध्यक्षपदमलङ्कुर्वाणा विपश्चिन्मणयः श्रीमन्तः Dr. मङ्गलदेवशास्त्रिमहोदया यतःकुतश्चिद्ग्रन्थमिममुपलभ्य समधिगतग्रन्थगौरवाः समनन्तरमेवाऽस्य मुद्रापणप्रकाशनादौ प्रयतमानाः संशोधनकार्यभारमस्मास्वारोपयन् । वयञ्च मातृकान्तरमुपलब्धुं बहुधा कृतप्रयत्ना अप्यन्यत्र भारतदेशीयपुस्तकालयेष्वनुपलभमाना एवैकामप्यपरां मातृकां, श्रीमच्छास्त्रिमहोदयदत्तामेकामेव शुद्धप्रायां मातृकामवलम्ब्य यथामति संशोधनमकुर्म । अतो मातृकान्तरानुपलम्भकारितं मनुजस्वभावजनितञ्च दोषं क्षमित्वा अदृष्टाश्रुतचरात्युत्तमग्रन्थलाभेनाऽन्तस्सन्तुष्यन्त्विति प्रार्थयामहे बुधजनान् ।

---

१ विधिर., श्लो. ९. पृ. २४. २ मयूखमा., १. २. १; २. २. ६. ३ मी. कौ., १. २ ४.

## ग्रन्थपरिचयः

ग्रन्थोऽयं भट्टकुमारिलमतानुयायीति नाम्नैव स्पष्टमवगम्यते। 'तुतातित' इति कुमारिलस्य नामान्तरमिति प्राचीना प्रथा। तदुपज्ञस्य मतस्योपपादकः पोषकश्चाऽयं ग्रन्थो यतः, अतस्तौतातितमततिलकमिति व्यपदेशः कृतो ग्रन्थकर्त्रा। भाट्टसम्प्रदायेनाऽधिकरणस्वरूपनिरूपणपरेषु ग्रन्थेष्वयमेव सर्वात्मना सर्वानप्यतिशेते ग्रन्थानिति स्पष्टमेव ग्रन्थस्याऽस्याऽवलोकनेन। यद्यपि पार्थसारथिमिश्रविरचिता शास्त्रदीपिका तत्तदधिकरणतत्त्वावेदनिका द्वादशाध्यायान्ता सुप्रसन्नाऽतिगभीरा च समुल्लसति, तथाऽपि 'तौतातितमततिलकं' अनितरसाधारण्या शय्यया, उपपादनसरण्या चाऽनन्यसुलभया अतिशेत एव तामपीति निर्विचिकित्समभ्युपगन्तव्यम्।

शास्त्रदीपिकायां क्वचित् क्वचिदेव त्वधिकरणेषु प्रभाकरमतखण्डनमुपलभ्यते। अत्र तु प्रत्यधिकरणं प्रभाकरमतस्य संशयपूर्वोत्तरपक्षोपपादनपूर्वकं खण्डनमुपलभ्यत इति शास्त्रदीपिकातोऽस्य वैशिष्ट्यं न तिरोधातुं शक्यते। प्रभाकरमते तत्तदधिकरणस्वरूपं याथातथ्येनाऽवगन्तुं यः क्लेशो मीमांसकानामासीत्, सोऽनेन दूरीकृत इति मन्यामहे महानयं प्रमोदावसरो मीमांसाध्येतॄणामिति।

किञ्च ग्रन्थादौ मङ्गलकरणानन्तरम्—

अजिता नैव सुबोधा संक्षिप्तं नाऽनुपदमतो लोकाः।
(वि)हतोत्साहा जाता न जानते तन्त्रटीकार्थम्॥

इत्युल्लेखनात्, मीमांसानिकेतनस्य प्रधानस्तम्भभूतैः प्रातःस्तुत्यप्रभावैर्भट्टश्रीकुमारिलपादैः, अतिगम्भीरमीमांसाभाष्यतत्त्वाधिजिगमिषूननुजिघृक्षया विरचितस्य भाष्यव्याख्यानरूपस्य तन्त्रवार्तिकस्य व्याख्यारूपोऽयं ग्रन्थ इत्यवगम्यते। अत एव ग्रन्थोऽयं प्रथमाध्याय-

द्वितीयपादप्रभृति आतृतीयाध्यायमेवोपलभ्यते। प्रत्यधिकरणं तत्त-दधिकरणपदार्थोपपादनावसरे तदुपोद्बलकतया 'तदुक्तम्' इत्या-रभ्य तन्त्रवार्तिकगताः कारिका एव बह्वय उपन्यस्ताः। अतश्च मन्यामहे नूनमेतद्ग्रन्थाध्ययनं तन्त्रवार्तिकार्थं यथावत्प्रतिपित्सूनां महत उपकाराय कल्पेतेति।

किञ्च तत्र तत्र पादसमाप्त्यवसरे—

यो नाम कश्चिदिह सङ्कलितं प्रमेयं
ग्रन्थान्तरे लिखति वा वदति स्वयं वा।
मत्कर्तृतामननुकीर्त्य स कीर्तिलोपा-
न्निस्सन्ततिर्जगति जन्मशतानि भूयात्॥

इति पद्यमुपलभ्यते। अनेन च स्पष्टमिदमभ्यूहितुं शक्यते-यद-स्मिन् ग्रन्थे पूर्वैः कैरप्यनाविष्कृता वार्तिकग्रन्थग्रन्थिभेदिनो विषया-स्सर्वेऽप्यन्यूनानतिरिक्ताः सुनिपुणमतिसरलया हृदयङ्गमया च रीत्या-ऽऽविष्कृताः। अतश्चाऽयं सर्वाङ्गीणसुन्दरोऽयं ग्रन्थ इति। अत एव चाऽप्पय्यदीक्षितसोमनाथखण्डदेवप्रभृतयो मीमांसकमूर्धन्या अपि स्वस्वग्रन्थेष्वेतद्ग्रन्थप्रतिपादितविषयानुल्लिख्याऽन्ते ग्रन्थकर्तुर्नाम सगौरवं सङ्कीर्तयन्ति-'इति भवदेवेनोपपादितत्वात्' 'भवदेवस्तु' 'अत्र भवदेवः' इत्यादिना।

ग्रन्थेऽस्मिन् जैमिनीयानां सर्वेषामपि सूत्राणां व्याख्या नोपल-भ्यते, किन्तु पूर्वपक्षसूत्रं सिद्धान्तसूत्रञ्च तत्तदादौ विलिख्याऽनन्तरं पूर्वपक्षं सिद्धान्तं प्रयोजनञ्च सम्यङ्निरूप्य, तत्तदन्ते तयारेव सूत्रयोः 'सूत्रन्तु' इत्यारभ्याऽर्थो विवृतः।

इतरग्रन्थापेक्षयाऽपरोऽयमत्र विशेषः—यत्

विशयो विषयश्चैव पूर्वपक्षस्तथोत्तरम्।
प्रयोजनञ्च पञ्चैते शास्त्रेऽधिकरणं स्मृतम्॥

इत्यभियुक्ताभिहिता शास्त्रमर्यादा सर्वथा परिपाल्यत इति। शास्त्रदीपिकादिषु ग्रन्थेषु तु प्रयोजनाख्यस्य पञ्चमावयवस्य बहुषु स्थलेषु परित्यागोऽवलोक्यते। अत्र तु प्रत्यधिकरणं पञ्चानामप्यवयवानां निरूपणं दृश्यते। अतोऽयं ग्रन्थो भाषया, अत्युत्तमया च विषयोपपादनसरण्या, तन्त्रवार्तिकतत्त्वाविष्करणेन, अंशतोऽपि शास्त्रीयमर्यादापरित्यागेन, प्रत्यधिकरणं प्रभाकरमतेनाऽपि पूर्वोत्तरपक्षनिरूपणेन च प्रशस्ततम इति निस्सङ्कोचमभ्युपगन्तव्यम्।

ग्रन्थकर्तृप्रतिज्ञापर्यालोचनया, तृतीयाध्यायान्ते 'समाप्तश्चाऽयमध्यायो ग्रन्थश्च' इत्युल्लेखनाच्च ग्रन्थोऽयं तृतीयाध्यायान्त एव रचित इत्यनुमीयते। तत्रेदानीं प्रथमाध्यायात्मकः प्रथमो भागः प्रकाश्यते। अवशिष्टाध्यायद्वयमपि नातिचिरादेव प्रकाशमेष्यति यदि भगवाननुकम्पते। अत्र च भूमिकायां केवलं ग्रन्थपरिचय एव दत्तः। अन्यद्वक्तव्यमस्य कर्तृकालादिविषये,तत्सर्वं तत्रैव भूमिकायां विस्तरशो निरिरूपयिषन्तोऽत्रैव विरमामः।

२२. ७. ३८ श्रीकाशी

इति विद्वज्जनवशंवदः
अ. चिन्नस्वामिशास्त्री

---




* श्रीः *

ॐ नमः शिवाय परस्मै ब्रह्मणे

श्रीभवदेवविरचितं

# तौतातितमततिलकम्

## प्रथमाध्यायस्य द्वितीयः पादः

### तत्र प्रथममर्थवादाधिकरणम्

यन्नाभिनलिनलीनब्रह्मचतुर्वदनसदनगायेन ।
रमते सरस्वती सह तस्मै चाऽस्यै नमस्कुर्मः ॥

मामध्ययनदशायामुवाच वाचं दर्शि स्वप्ने ।
बालवलभाभुजङ्गापरनामा त्वमसि भवदेव ॥

तेनाऽयमुद्यमो मे विद्यादर्पान्न जातु संजातः ।
तस्मादिहाऽवधानं विधातुमधिकुर्वते सुधियः ॥

अजिता नैव सुबोधा संक्षिप्तं नाऽनुपदमतो लोकाः ।
हतोत्साहा जाता न जानते तन्त्रटीकार्थम् ॥

तेषामुत्साहोचितमुचितसुवर्णोपरचितमल्पं च ।
शेषार्थरत्नमिलितं तिलकमिदं वदनगं जयति ॥

# आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते॥ १. २. १.॥

( विषयसंशयौ )

"सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं" ( तै. सं. १. ५. १. ) "स आत्मनो वपामुदक्खिदत्" ( तै. सं. २. १. १. ) "देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्" (तै. सं. ६.१.५.) इत्येवमादीनि समाम्नातारस्समामनन्ति वाक्यानि। तानि किं कञ्चिद्धर्म्मं प्रमिमत उत नेति भव (+ति वि)चारणेति। नन्वध्यायोपक्रमे "चोदनालक्षणोऽर्थो धर्मः" ( जै. सू. १. १. २. ) इति चोदनायाः प्रामाण्यं प्रतिज्ञातम्, न तु मन्त्रार्थवादादेः। प्रवर्तकं च वचनं चोदना। तदुक्तम्—"चोदनेति क्रियायाः प्रवर्त्तकं वचनं" (शा. भा. पृ. ३. पं. ९. चौ. सं. ) इति। तत्प्रामाण्यं च ( +प्रथमपा )दे प्रतिपादितमेव। तत् कथं सिद्धार्थानामर्थवादानामप्रतिज्ञाताप्रस्तुतप्रामाण्याप्रामाण्यविचारसंगतिरिति ?

तत्रैके समाधानमेवमभिदधति—प्रथमपादसिद्धमपि चोदनाप्रामाण्यमर्थवादैकवाक्यतावशेनाऽप्रतिपादकतया पुनराक्षिप्यत इति।

( प्रभाकरमतेन पूर्वपक्षः )

तत्राऽयं पूर्वपक्षिणोऽभिप्रायः—वृद्धव्यवहारे हि शब्दानां कार्यार्थतयैव व्युत्पत्तेरर्थ(+वादाना)मपि कार्यार्थत्वम् । न चाऽर्थवादानां साक्षात् कार्यार्थत्वं संभवति । संभवति तु चोदनैकवाक्यतया । न च लक्षणया प्राशस्त्यप्रतिपादनेन चोदनैकवाक्यत्वम् । प्राशस्त्यस्य विध्यनपेक्षितत्वेनाऽसम्बन्धात्, अर्थ(+वादानां प)रोक्षवृत्तितापत्तेश्च । सिद्धार्थसाध्यार्थतयोश्चैकवाक्यत्वं तदर्थयोर्हेतुहेतुमद्भावेन दृष्टम् । यथा—मलिनस्स्नायात् मलिनानि मे वसनानि, राजकुलं मया न गन्तव्यमित्यादिषु लोके तथा दर्शनात् (+न हि रुद्ररो) दनादीनां हेतुत्वं करणेतिकर्त्तव्यतयोरन्यतररूपेणाऽपूर्वोत्पत्तौ संभवति । अपूर्वोद्देशप्रवृत्तकृतिसाध्यत्वाभावात् । नाऽपि व्रीह्यादेरिव कारकतया ; उत्पन्नातिवृत्तस्य रुद्ररोदनादेर्व्यापारयितुम(+शक्यत्वा)त् । तेन ज्ञप्तावेव हेतुत्वं वक्तव्यम् । तत्राऽपि न विषयतया, नाऽपि नियोऽयतया । यतः कृत्यवच्छेदकतया हि यागादीनां विषयत्वम् । न च कृत्यसाध्यानां कृत्यवच्छेदकत्वम् । एवं स्वकृतिप्रयोजनत्वेन हि नियोगं नियोज्यः । न चाऽर्थवादानां तथाभावोऽस्तीति पारिशेष्याद्धूमादिवज्ज्ञप्तिहेतुत्वं वक्तव्यम् । तत्र यदि हेतुस्वरूपतत्प्रतिबन्धग्राहकं प्रमाणमस्ति, तदा प्रतिबन्धबलेनाऽनुमानवाक्यमिवं हेतुद्वारेणाऽर्थं व्यवस्थापयन्ती चोदनाऽनुमानवाक्यवदेव स्वतो न प्रमा-

णम्। अथ हेतुस्वरूपादिग्राहकं प्रमाणं नाऽस्ति, तदा लिङ्गभावे नाऽपि ज्ञप्तौ हेतुत्वासम्भवादप्रतिपादकत्वादेवाऽप्रामाण्यं चोदनाया इति पारमार्थिकः पूर्वपक्षः। न चाऽरुणपराशरादिशाखास्वर्थवादाभावान्न तदेकवाक्यतया कृत्स्नवेदाप्रामाण्यमिति वक्तव्यम्, यतः 'सर्वशाखाप्रत्ययमेकं कर्मे'ति (१)न्यायेन क्वचित्प्रतिपादितस्य प्रधानस्य वाऽङ्गस्य वा शाखान्तरीयसार्थवादाङ्गप्रधानैकवाक्यतया सर्वाक्षेपोपपत्तिः। तथा चोक्तम्—

अङ्गद्वारः प्रधानेषु सिद्धार्थानुगमः क्वचित्।
प्रधानद्वारकोऽङ्गेषु क्वचिदस्ति स्वतः क्वचित्॥ इति।

ननु यद्यपि वृद्धव्यवहारत एव व्युत्पत्तिः, तथाऽपि सर्वशब्दानां कार्यान्विताभिधानसामर्थ्यं हित्वाऽऽकाङ्क्षितयोग्यसन्निहितान्वितमात्राभिधानसामर्थ्येनैव सामान्यव्युत्पत्तौ लिङादियुक्तवाक्येषु कार्यस्यैव तथाभूतत्वात्तदन्विताबगतेर्न सर्वशब्दानां विशेषशक्तिकल्पना, व्युत्पत्तिकालावगतत्वमात्रेण विशेषशक्तिकल्पने शाब्दसन्निहितेनैव व्युत्पत्तावन्वयदर्शनात् 'द्वारं द्वारमि'त्यादावश्रुताध्याहारशब्दकल्पनाप्रसङ्गः। तेन यथा होलाकाधिकरणे सामान्यशास्त्र-

---

(१) न्यायोऽयं शाखान्तराधिकरण ( पू. मी. २.४.२. ) सिद्धः।

कल्पनयैव विशेषाचारोपपत्तौ न विशेषशास्त्रकल्पना, एवमिहापि आकाङ्क्षादिमन्मात्रशक्तिकल्पनैवेति ।

तदयुक्तम् ; न हि वृद्धव्यवहारदृष्टत्वमात्रेण कार्यान्विताभिधानशक्तिकल्पनम्। किं तर्हि ? स्वसन्तानव्युत्पत्त्यनुसारेण । स्वसन्ताने च कार्यस्यैवाऽनेकविशेषणविशिष्टस्य प्रवृत्तिहेतुत्वावगमाद्व्यवहारवाक्येऽपि तदर्थत्वनिर्णयः । न च स्वसन्ताने आकाङ्क्षादिमन्मात्रे शब्दसन्निहिते वा व्युत्पत्तिः । होलाकाधिकरणे तु व्यभिचारेण तत्तद्देशादिविशेषप्रतिपादकोपपदवच्छास्त्रकल्पनाप्रमाणाभावात् । भवतु सामान्यशास्त्रकल्पना । न हि तत्राऽनुष्ठातृमात्रानुगतमननुष्ठातृव्यावृत्तं च किञ्चिद्व्यवस्थाकारणमस्ति । तथाचोक्तम्—

अव्यवस्थितवाच्यार्थप्राच्यादिपदतः श्रुतिः ।
वाच्यानध्यवसायेन प्रामाण्यं नैव गच्छति ॥ इति ॥

तथा वार्त्तिककारपादैरप्युक्तम्—

न त्वत्रोपपदं किञ्चिद्यथाचारानुसारि यत् ।
अनुमीयेत तद्देशदृष्टकर्तृविशेषणम् ॥ इति ॥

( तं. वा. १. ३. ७. पृ. २४९. पू. सं. )

तेन होलाकाधिकरणन्यायमभिदधता उभयदर्शनानभिज्ञतैव

ज्ञापितेति । अथोच्येत—यथा 'गामानये'त्यादिषु कार्यार्थान्वयोऽवगतः, तथा 'गौर्गच्छती'त्यादिषु सिद्धार्थान्वयोऽप्यवगत एव । तेनोभयत्राऽपि प्रयोगदर्शनादुभयानुगताकाङ्क्षादिमन्मात्र एव शक्तिरवधार्यते, न कार्यमात्रे । यथा देवदत्तस्य पुत्र इति नप्तेति च साक्षात्सम्बन्धे परम्परासम्बन्धेऽपि प्रयोगदर्शनात् षष्ठीविभक्तेरुभयानुगतसाक्षात्पारम्पर्योदासीनसम्बन्धमात्रे शक्तिः । यथा च तत्रैव द्वितीयाविभक्तेरीप्सितेऽनीप्सिते च प्रयोगदर्शनादुभयानुगतक्रियाजन्यफलभागित्वमात्र एव शक्तिः, न तु भट्टस्येवेप्सितमात्र इति । तदयुक्तम्; स्वव्युत्पत्त्यनुसारेण तावत्, सर्वशब्दानां कार्यान्वयपरत्वमेवाऽवगतं पश्चात्सिद्धार्थपरत्वमवगम्यमानं न व्युत्पत्तिकालावगतमनन्यथासिद्धं कार्यान्वयपरत्वं बाधितुमुत्सहते, सिद्धान्वयावगमस्य लक्षणयैवोपपत्तेः ।

ननु व्युत्पत्तिकालावगतमपि क्रियाकार्यवाचित्वं पश्चाद्भाविस्थायिकार्यावगमेन बाध्यत एव, तथाऽत्राऽपि भविष्यतीति । मैवम्; पश्चाद्भाविनोऽपि स्थायिकार्यावगमस्याऽनन्यथासिद्धत्वात् । पूर्वावगतार्थे हि लक्षणादिकं भवति । न चाऽपूर्वस्य पूर्वावगतिरस्ति, अपूर्वत्वव्याघातात् । अस्ति तु क्रियाकार्यस्य पूर्वावगतिः । तेनाऽनन्यथासिद्धेन पश्चादवगतेनाऽपरस्याऽसिद्धस्य पूर्वावगतस्याऽपि बाधित-

त्वाद्भवति क्रियाकार्यस्य लाक्षणिकत्वम् , अपूर्वकार्यस्यैव च मुख्यत्वम् । न चेह तथेति वैषम्यम् ।

यत्तु षष्ठीद्वितीयाविभक्त्यर्थनिदर्शनम् , तदसम्बद्धमेव । न हि तत्र नियमेन प्रथमं षष्ठ्याः साक्षात्सम्बन्धं परम्परासम्बन्धं वा, द्वितीयाया ईप्सिततमत्वमनाप्सिततमत्वं वा कश्चिदवगच्छति, येन मुख्यार्थत्वमेव भवेत् । अनियमेन तु प्रतीतौ साधारणार्थत्वमेव युक्तम् ।

अथैवमभिधीयते—भवेदेवं यदि व्युत्पत्तौ सर्वशब्दानां कार्यान्वयपरत्वमेवाऽधिगतं भवेत् । 'पुत्रस्ते जात' इत्यादिषु सिद्धार्थपरत्वेनाऽपि व्युत्पत्तेः । यथा हि 'गामानये' ति शब्दश्रवणसमनन्तरं विशिष्टार्थविषयव्यवहारदर्शनाच्छब्दजनितविशिष्टार्थविषयकार्यावगमानुमानम् , तथा पुत्रजन्मप्रतिपादकवाक्यश्रवणानन्तरं पितृगतमुखप्रसादरोमहर्षादिदर्शनेन प्रमाणान्तरावगततत्पुमपत्यजन्मनो व्युत्पद्यमानस्य शब्दजनितहर्षहेतुसिद्धरूपपुत्रजन्मावगमानुमानमपि सम्भवतीति क्व कार्यान्वयः ? एवं सर्वशब्दानां व्युत्पत्तिरिति ।

तदयुक्तम् ; विकल्पासहत्वात् । किं सर्वथा शब्दव्यवहाराव्युत्पन्नस्येयं सिद्धार्थव्युत्पत्तिः ? अर्द्धव्युत्पन्नस्य वा ? तत्राऽव्युत्पन्नस्य हर्षहेतूनामानन्त्याद् विशेषानवगतिरेव । यथा हि तत्र हर्षहेतुतया पुत्रजन्म सम्भावितम् , तथा सुभगागर्भविमोकसुखप्रसवशुभलग्नजन्मा-

दीनामनेकेषामुपप्लवान्न शब्दस्य पुत्रजन्मप्रतिपादनावधारणे प्रमाणमस्ति । नाऽप्यर्द्धव्युत्पन्नस्य, पूर्वसिद्धव्युत्पत्त्यनुसारेणाऽव्युत्पन्नशब्दस्याऽपि कार्यपरत्वस्यैवाऽवगमात् । कार्यपरत्वासम्भवे च लक्षणया सिद्धार्थान्वयपरत्वस्योचितत्वात् । तेन व्युत्पत्त्यनुसारेण सर्वशब्दानामेव सिद्धे कार्यान्वयपरत्वेऽर्थवादानामपि कार्याकाङ्क्षायां स्वतन्त्रकार्याभावात् समभिव्याहृतविध्युद्देशैकवाक्यतया कार्यपरत्वं वाच्यम् । न च तदुच्यते, पूर्वोक्तदूषणग्रासात् । तस्मादर्थवादैकवाक्यतावशादप्रतिपादकत्वात् सिद्धमप्रामाण्यं चोदनायाः । तेन प्रथमपादसिद्धमपि चोदनायाः प्रामाण्यमर्थवादैकवाक्यतावशेनाऽप्रतिपादकतया पुनराक्षिप्य समाधीयत इति भवति सङ्गतिरिति ।

( प्रभाकरमतेन सिद्धान्तः )

अत्रोच्यते—सर्वशब्दानां तावद्व्युत्पत्तिसिद्धं कार्यपरत्वं स्वाभाविकमवगतम् । तच्च क्वचिदनाप्तवाक्ये दोषवशात्तिरोधीयेताऽपि । न चेह नित्यनिर्दोषवाक्ये तथा सम्भवति । अतो येन प्रकारेणाऽस्य कार्यपरता सम्भवति, तदनुसन्धेयम् । तस्य च यद्यपि करणेतिकर्त्तव्यताविषयनियोज्यरूपार्थप्रतिपादनेन नाऽन्वयोऽस्ति, तथाऽपि प्राशस्त्यप्रतिपादनेन भविष्यति । प्राशस्त्यस्य च क्रमवद्विधेयोपलक्षणतया कार्यविशेषप्रतीत्युपयोगसम्भवात् ।

नन्वेककर्तृकानेकपदार्थानुष्ठानस्य क्रमविशेषमन्तरेणाऽसम्भवात्, क्रमस्य प्रयोगोपलक्षणत्वेनाऽन्वयस्याऽऽकाङ्क्षितत्वाद्युक्तस्तथाऽन्वयः। प्राशस्त्यं तु फलसाधनतादिरूपं विधित एव सिद्धं न क्रमवदाकाङ्क्षितमिति कथं तदन्वयः? नैवम्; एकवाक्यताबलेन रक्तपटवदाकाङ्क्षोत्थापनेनैवाऽन्वयोपपत्तेः। न च वाच्यं रक्तस्याऽनन्यलभ्यस्य भवत्वाकाङ्क्षोत्थापनेन पटविशेषकत्वादन्वयः, प्राशस्त्यस्य तु विधिबोध्यत्वेनाऽनधिकत्वान्नाकाङ्क्षेति। यतो नाऽधिकार्थत्वेऽपि 'एकं ब्राह्मणं भोजयेदि'त्यादिषु ब्राह्मणपदस्थद्वितीयाविभक्त्यभिधेयैकत्वाभिधायिनामप्येकादिपदानामनुवादरूपेणाऽप्येकवाक्यताबलेनाऽन्वयोपलब्धिः।

तेनैतदधिकरणव्युत्पाद्यमेतदेव—यत्स्वरसतो विदूष्यनाकाङ्क्षितेऽपि सर्वथा प्रवृत्त्यनुपयोगिन्यनन्यलभ्येऽप्यर्थे एकवाक्यताबलेनाऽऽकाङ्क्षोत्थापनेनाऽपि शब्दस्याऽन्वयबोधनतात्पर्यमिति। तच्च प्राशस्त्यं लक्ष्यमाणमर्थवादपदानि प्रत्येकं वा लक्षयन्ति। सर्वशब्दानां कार्यान्वितस्वार्थाभिधायकत्वे तेषां स्वतोऽनभिधायकतयाऽन्यायसम्पादनया च प्रथममवगतप्राशस्त्यलक्षणासम्भवादिति। तेन सार्थवादकस्यैव विध्युद्देशस्य कार्यपरतया सिद्धं प्रामाण्यमिति।

( प्रभाकरमतखण्डनम् )

तदेतौ पूर्वपक्षसिद्धान्तावेवाऽनुपपन्नौ । तथा हि—कार्यपरत्वमेव सर्वशब्दानामिति यदुपवर्णितम् , तत्तावदसम्बद्धम् । यतो, यथा हि स्वसन्ताने स्तनपानादौ विशिष्टकार्यावगमस्य प्रवृत्तिहेतुत्वमवगतम् , तथा सिद्धान्वयरूपस्याऽपि जननीगात्रसम्पर्कादेर्हर्षहेतुत्वमवगतमेव । तेन यथा 'गामानये'त्यादिशब्दश्रवणानन्तरं प्रयोज्यवृद्धस्य विशिष्टव्यवहारदर्शनेन विशिष्टकार्यावगममुन्नीय विशिष्टकार्यावगमपरत्वं विधिशब्दसमभिव्याहृतशब्दानामध्यवसीयते, तथा अतिदूरस्थपुत्रागमने सत्य'यं ते पुत्रः समायात' इति शब्दश्रवणानन्तरं मुखप्रसादादिदर्शनेन पितृगतं सिद्धं हर्षहेतुमुन्नीय सिद्धार्थान्वयावगमपरत्वमप्येवंविधशब्दानां तद्भावभावितया प्रतीयत एव ।

अथ 'मालवे ते राज्यं भविष्यती'ति ज्योतिर्विदाख्याते भविष्यद्राज्यावगमस्याऽपि हर्षहेतोर्दर्शनान्न सिद्धार्थान्वयावगमस्य सर्वत्र हर्षहेतुत्वम् । एवं तर्हि भवतामप्येवंविधवाक्यश्रवणानन्तरं मालवादिगमनप्रवृत्तिसन्दर्शनेन व्यभिचारात्, कथं सर्वत्र कार्यान्वयपरत्वम् । अथाऽस्य कार्यानभिधायकत्वेऽपि कार्यपदाध्याहारेण वा, स्वबुद्धिप्रभवकार्याध्यवसायेन वा प्रवर्त्तनम् , एवमत्राऽपि स्वगतमालवराज्ययोग्यताप्रतिपादकशब्दाध्याहारेण वा, स्वबुद्धिप्रभवराज्य-

योग्यताध्यवसायेन वा सिद्धान्वयावगमस्यैव हर्षहेतुत्वोपपत्तिः। तेन हर्षहेतूनामानन्त्येऽपि सिद्धार्थान्वयावगमस्तावन्न व्यभिचरति। विशेषावधारणमपि यथा त्वत्पक्षे विशिष्टार्थविषयचेष्टादर्शनात् सम्पद्यते, तथा ममाऽपि विशिष्टभूतार्थान्वयदर्शनानन्तरं शब्दप्रयोगात्सेत्स्यति।

अथ प्रतीतमपि हर्षहेतुभूतं पुत्रागमनं पुत्रगतहर्षहेतुगुणोत्कर्षाद्यभिधानशङ्कया तद्वाक्यान्न निश्चीयते, तदा तवाऽपि 'गामानये'त्यादौ गोदर्शनानन्तरं गोगतगुणोत्कर्षादिकार्यप्रतिपादनसम्भावनयाऽऽनुषङ्गिकं गवानयनं मन्यमानो नाऽऽनयनकार्यप्रतिपादनं निश्चिनुयात्। आवापोद्धारभेदेन च तत्तत्पदार्थावगमोऽस्माकमपि समान एव। तेनाऽऽद्यव्युत्पत्तावेव कार्यान्वयस्येव सिद्धान्वयस्याऽपि दर्शनादाकाङ्क्षायोग्यतासन्निधिमात्रयुक्तपदार्थान्वयप्रतिपादन एव सर्वशब्दानां सामर्थ्यमिति निश्चीयते। तेन यदुक्तं शालिकेन—

यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते।
तेनाऽन्वितः पदेनाऽर्थः स्वकीयं प्रतिपाद्यते॥ इति॥

(प्र. पं. वाक्यार्थमातृका, पृ. ५०)

त्वन्मतेऽप्येतदेव साधु न पुनस्सर्वशब्दानां कार्यान्वयपरत्व-

मिति । किञ्च भवतु तावद्वृद्धव्यवहारेण विधिशब्दसमभिव्याहृतपदानां कार्यान्वितार्थप्रतिपादन एव व्युत्पत्तिः, तथाऽपि 'गौर्गच्छती'त्यादिषु सिद्धार्थान्वयावगतिः कथं लाक्षणिकी ? अवगतमुख्यार्थानुपपत्त्या हि लक्षणा भवति। न चाऽत्र कार्यान्वयरूपो मुख्योऽर्थः प्रतीयते, कार्याभिधायकशब्दाभावात् । न चाऽभिधायकशब्दाभावेऽप्यौचित्योपस्थितस्य कार्यान्वयस्य गच्छतीति सिद्धार्थाख्यातपदे सत्यसम्भवाद्योग्यसिद्धान्वयस्यैव लाक्षणिकत्वमिति वाच्यम् । तथा सति समीहितफलार्थिनियोज्यान्वयस्यैव सर्वत्रौचित्यप्राप्तत्वान्नित्याधिकारे तदसम्भवेन नियोज्यमात्रान्वयस्याऽपि लाक्षणिकत्वप्रसङ्गात् । तेन सिद्धार्थान्वयपरत्वमपि शब्दस्याऽवश्याङ्गीकरणीयम् । अतस्सर्वशब्दानां कार्यान्वयप्रतिपादनपरत्वादर्थवादानां विध्युद्देशैकवाक्यतया पूर्वसिद्धान्तपक्षयोरप्रामाण्यं प्रामाण्यं चेत्युभयमप्यनुपपन्नमेव ।

किञ्च भवतु सर्वशब्दानां कार्यान्वयपरत्वम् , तथाऽप्यर्थवादानां विध्युद्देशैकवाक्यतया पूर्वपक्षो नोपपद्यते । यतो, यथा हि 'गामानये'त्यत्र व्यवहारसन्दर्शनेन कार्यपरत्वमवगतम्, तथा 'अङ्गुल्यग्रे करियूथं निवासयेदि'त्यत्र विधिशब्दयोगेऽपि व्यवहारादर्शनान्न कार्यपरत्वमवगतम् । तेन व्युत्पत्तावेवैतत्समधिगतं, यत् कार्यान्वय-

योग्यानामेव कार्यपरत्वं न त्वयोग्यानामिति । न चाऽर्थवादानां केनाऽपि प्रकारेण कार्यान्वययोग्यता समस्ति, उत्पत्तिज्ञप्तिहेतुत्वप्रकारयोरसम्भवात् । तेन कार्यपरत्वासम्भवाद्भवत्वर्थवादानामेवाऽङ्गुल्य-आदिवाक्यवदप्रामाण्यम् ।

यत्तु तदेकवाक्यतामारोप्य कृत्स्नवेदस्याऽप्रामाण्यं, तदतीव हास्यास्पदम्—

यथा मशकदोषेण दाहो मोहाद्गृहस्य च ।
तथाऽर्थवादवैयर्थ्यात् कृत्स्नवेदाप्रमाणता ॥

अतो विध्युद्देशैकवाक्यतया पूर्वपक्षादाक्षेपोऽयं मन्दाक्षव्य-वहारिण एव शोभत इति ।

तथा प्राशस्त्यप्रतिपादनद्वारेणैकवाक्यतया सिद्धान्तोऽप्यनुपपन्न एव । त्वन्मते विध्यवबोधितत्वेन प्राशस्त्यस्याऽनतिरिक्ततयाऽनाकाङ्क्षितत्वात् । न च रक्तपटन्यायेनाऽऽकाङ्क्षोत्थापनेनाऽन्वयः । अनतिरिक्तार्थस्याऽऽकाङ्क्षोत्थापनासम्भवात् । न ह्युच्चरिते रक्तपदे पुनरुच्चरितं रोहितपदमाकाङ्क्षामुत्थापयति । 'एकं ब्राह्मणं भोजये-दि'त्यादिषु तु लोके समुदायपरस्याऽप्येकवचनप्रयोगस्य 'भक्तं भुङ्क्ष्वे'त्येवमादिषु दृष्टत्वात् सन्देहव्युदासप्रयोजनेन भवत्येकपद-

स्याकाङ्क्षोत्थापकत्वम्, न त्विह तथा किञ्चित्प्रयोजनमस्तीति वैषम्यमित्यलमतिविस्तरेण। अतोऽस्य विचारस्याऽसङ्गतत्वाद्यथावार्त्तिकमन्यथैव सर्वं वर्णनीयमिति।

( भाट्टमतेन सङ्गतिः )

अत्र हि चोदनासूत्रे कृत्स्नवेदप्रामाण्यमेव प्रतिज्ञातम्। सर्वत्र पौर्वापर्यप्रतिसन्धानेन हि शब्दार्थव्यवस्थितिर्भवति। अत्र च "अथाऽतो धर्मजिज्ञासे"ति कृत्स्नवेदाध्ययनस्यैव धर्म्मजिज्ञासाहेतुत्वं प्रथममुपवर्णितम्। तच्च तदैव सम्भवति–यदि कृत्स्न एव वेदो धर्म्मे प्रमाणमित्यभिमतम्। तथा पश्चादप्यौत्पत्तिकसूत्राभिधेयस्य "अनपेक्षत्वादि"ति हेतोः पदपदार्थसम्बन्धसंहतिनित्यताव्युत्पादनस्य च कृत्स्नवेदप्रामाण्योपपत्तित्वादुपरिष्टादपि करिष्यमाणानेकविचारस्य वेदमात्रविषयत्वात्। तेन कृत्स्नवेदप्रामाण्यप्रतिज्ञानमेवैतत्। वेदपदे तु प्रयोक्तव्ये यच्चोदनापदं प्रयुक्तं तत्प्रामाण्यशक्तिप्रदर्शनार्थम्। अतः कृत्स्न एव वेदश्चोदनात्वेन रूपेण धर्म्मे प्रमाणमिति सूत्रार्थः।

तत्र प्रथमे पादे सकलेन प्रामाण्यप्रतिपादनप्रबन्धेन यद्यप्यर्थवादानामपि प्रामाण्यं प्रतिपादितमेव, तथाऽपि चोदनात्वरूपानभि-

व्यक्तेः पुनराक्षिप्य चोदनान्तर्गतिसमर्थनार्थोपयागप्रतिपादनेन समाधीयत इति सङ्गतिरिति ।

( भाट्टमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः । "तद्भूतानां क्रियार्थेन समाम्नाय" (जै॰ सू॰ १॰ १॰ २५॰) इत्युपसंहाराच्चोदनास्वेव चेत्प्रामाण्यं क्रियार्थतया प्रतिपादितं, तदाऽर्थवादानां सिद्धार्थानां साध्यसाधनेतिकर्त्तव्यतानामन्यतरूपाप्रतिपादनान्न क्रियार्थत्वं सम्भवति । न च क्रियानङ्गत्वेऽपि विधेयस्तुतिद्वारेण प्रवृत्त्युत्साहजनकतया क्रियाविषयविध्यङ्गतया क्रियार्थत्वम्, अर्थवादतः स्तुत्यनवगमात् । नाऽपि लक्षणया स्तुत्यर्थत्वम्, विनाऽपि लक्षणया भूतार्थानां पदानामन्वयस्योपपन्नत्वात् । नाऽपि विध्येकवाक्यतानुपपत्त्या लक्षणा, भिन्नार्थतया विध्येकवाक्यताया एवाऽसम्भवात् ।

अथैवमभिधीयेत— अपेक्षितदृष्टार्थावबोधार्थोऽयमध्ययनविधिः कृत्स्नस्वाध्यायाध्ययनं विदधानः साक्षादर्थवादेष्वपेक्षितमर्थमपश्यन् विधेयस्तुतिलक्षणया तेषामपेक्षितार्थपरत्वमापादयतीति । तदयुक्तम्; विधिमन्तरेणाऽप्युच्चरिताच्छब्दादर्थावगतिदर्शनेन विधिवैफल्यात् । तदुक्तम्—"अप्राप्ते शास्त्रमर्थवदि"ति । न चाऽर्थावबोधा-

र्थानामध्ययनमुपायो नियम्यते । उपश्रुत्यवगताल्लिप्यक्षरानुमिताच्च स्वाध्यायादर्थधीदर्शनेन प्रमाणविरोधात् । अवघातादिविषयस्तु नियमोऽपूर्वसाधनांशनिपाती न दृष्टांशोपनिपातीति न तत्र प्रमाणविरोधः । न चेहाप्यपूर्वसाधनांशलक्षणा, यतोऽध्ययनस्य यागप्रकरणेऽनाम्नानात् । न च पर्णताया इवाऽव्यभिचरितक्रतुसम्बन्धजुहूद्वारेणाऽपूर्वार्थत्वम्, स्वाध्यायस्य क्रतुसम्बन्धव्यभिचारात् । अथ क्रतूपकारितामात्रेण क्रतौ नियम्येत, तदा द्रव्यार्जनस्याऽपि क्रतूपकारकतया क्रतौ नियमः प्रसज्येत ।

किञ्च यद्ययं क्रतौ नियमस्तदा ऽध्ययनावगतस्यैव स्वाध्यायार्थस्याऽभ्युदयकरत्वम् । तथा च सति तदहःकृतोपनयनस्य माणवकस्य संध्योपासनाग्निहोमादिकर्मणां तत्प्रकाशकवेदस्याऽनवगमे वैफल्यात् सर्वेषामेवाऽब्राह्मण्यमिति महाननर्थो नियमवादिनामापतितः । किञ्चाऽनुमितश्रुतेरनधीतत्वेन तदर्थस्याऽननुष्ठेयत्वात् स्मृतिकाराणां सकलस्मृतिप्रणयनवैयर्थ्यप्रसङ्गः । शूद्रस्य चाऽनधीतवेदत्वेन श्राद्धादिसकलवेदार्थानुष्ठानवैफल्यप्रसङ्गः । किञ्चाऽनधीतनिषेधवाक्यस्य निषिद्धब्रह्मवधाद्यनुष्ठानेऽपि प्रत्यवायो न भवेत् । अधीतवेदावबुद्धस्यैव निवृत्तिरूपार्थस्याऽपि तथा सति प्रत्यवायपरिहारहेतुत्वात् ।

अथ "अनधीयाना हि व्रात्या भवन्ती"ति वचनात् पुरुषे नियमो नाऽर्थज्ञाने । तेनाऽयमर्थः—द्विजातिस्स्वाध्यायमधीयीतैव न त्वनधीतेनैवाऽर्थं जानीयादिति । तत्र यद्यपि प्रत्यवायपरिहारेण प्रयोजनवानयमध्ययनविधिः, तथाऽपि भावना भाव्याकाङ्क्षायां दृष्टत्वात्प्रयोजनवदर्थज्ञानमेव भाव्यं गृह्णाति । न चवं शूद्रस्याऽप्यधिकारप्रसङ्गः । यतो लब्धविद्यत्रैवर्णिककल्पनेनैव निराकाङ्क्षाः कर्मिश्रुतयो न शूद्रस्य विद्यासम्बन्धमाक्षेप्तुमलम् । एवञ्च सति त्रैवर्णिकस्योपायान्तरनिवृत्तेरर्थादयमर्थज्ञाने नियमो न तु तन्नियमार्थोऽयं विधिरिति । तथा सति प्रयोजनवदर्थज्ञानस्याऽध्ययनभावनाभाव्यत्वादर्थवादेषु च मुख्यार्थेषु तदसम्भवात् स्तुतिलक्षणाद्वारेणैव विध्युद्देशैकवाक्यतया प्रामाण्यमर्थवादानामिति ।

तदयुक्तम्—एवं सत्यध्ययनविधेः प्रत्यवायपरिहारप्रयोजनेनैव चरितार्थस्य किं भावनाभाव्यस्वीकारेऽपि व्यापारोऽस्ति ? न वा ? यद्यस्ति तदा दृष्टे विधिवैफल्यात् न दृष्टमर्थज्ञानं भावनाभाव्यं सम्भवति । क्रतुसम्बन्धितया च नियमविधेरनिष्टत्वात् । उक्तसकलदोषानतिक्रमेण च तस्याऽसम्भवात् । अथ नाऽस्ति, तदा निकृष्टभावनामात्रस्य लोकदृष्टभाव्याकाङ्क्षायां नान्तरीयकतयाऽर्थज्ञाने सम्बध्यमाने, अर्थवादकृतमपि भूतार्थज्ञानं सम्ब-

ध्येत । न तु पुरुषसमीहितमर्थज्ञानम्, विधितात्पर्याभावात् । अतोऽर्थवादानां मुख्यभूतार्थोपपन्नत्वान्न लक्षणयाऽपि स्तुतिपरत्वम् ।

तेन प्रत्यवायपरिहारप्रयोजनेनाऽर्थवतोऽध्ययनविधेर्मानिनाभाव्येऽर्थज्ञाने तात्पर्यविरहेऽपि प्रथमपादे विधेयक्रियार्थत्वेन चोदनाप्रामाण्यप्रतिपादनात्, यस्मिन् स्वाध्यायैकदेशे विध्युद्देशरूपे प्रामाण्योचितं विधेयरूपक्रियाज्ञानं सम्भवति तद् भवतु प्रमाणम् । यत्र पुनरर्थवादभागे भूतार्थान्वयज्ञानमात्रं तद्विधेयरूपक्रियार्थत्वाभावादप्रमाणमेव ।

एतेनैतदपि न शङ्कनीयम्—किमर्थमर्थवादाध्ययनमिति । कृत्स्नस्वाध्यायाध्ययनस्यैव प्रत्यवायपरिहारप्रयोजनेनाऽर्थवत्वात् । एतदेव चाऽस्याऽधिकरणस्य पारमार्थिकं पूर्वपक्षरहस्यम् । तस्मात् "आम्नायस्य" वेदस्य विधेयरूप "क्रियार्थत्वात्" पृथगवस्थितानामर्थवादानां "आनर्थक्यं" विधेयक्रियानर्थत्वम् । "तस्मादनित्यं" अप्रमाणं "उच्यत" इत्येवं प्राप्ते अभिधीयते—

## विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः

( भट्टमतेन सिद्धान्तः )

अयमभिप्रायः—भवेदेतदेवं यदि स्तुतिद्वारेण विधेयक्रियार्थ-

त्वमर्थवादानां न स्यात्। विधिर्हि शब्दभावना। सा चार्थभावनेव साध्यसाधनेतिकर्त्तव्यताकाङ्क्षिणी। तत्र पुरुषप्रवृत्तिरूपं भाव्यं, सम्बन्धबोधं च करणमासाद्येतिकर्त्तव्यताकाङ्क्षायां लोकानुसारेण प्रवृत्त्युत्साहजनकं विषयप्राशस्त्यज्ञानमेव स्वीकुरुते। दृष्टं च लोके क्रयविक्रयादिव्यवहारे प्रवृत्त्युत्साहजनकं विषयप्राशस्त्यज्ञानमेव। यथा—इयं गौः क्रेयाऽनष्टप्रजा बहुक्षीरा स्त्र्यपत्या, यथा वा—अयं क्रेतव्यः पुरुषो न पुरुषमात्रं किन्त्वयं मत्तो हस्ती, यथा वा—प्रतिग्रहादिप्रवृत्तौ नाऽयं ब्राह्मणमात्रम्, किन्तु वसिष्ठोऽयमित्यादिषु। तद्यथा लोके सदसदर्थप्रतिपादकस्य पदनिचयस्य लक्षणयाऽपि वृत्त्या प्राशस्त्यप्रतिपादनेन विध्येकवाक्यत्वम्, तथाऽत्राऽप्यर्थवादानां प्राशस्त्यलक्षणया शब्दभावनेतिकर्त्तव्यतांशपूरणेन विध्युद्देशैकवाक्यत्वेन भवति क्रियार्थत्वम्। न चाऽर्थभावनारूपक्रियायां साध्यसाधनेतिकर्त्तव्यतानामेव परमन्वयः, अनेवम्भूतस्य विधेरनन्वयप्रसङ्गात्। विधेश्च सपरिकरस्यैवाऽन्वयात्तत्प्रवेशादेव प्राशस्त्यान्वयो न तु स्वातन्त्र्येणेति नाऽनुपपन्नम्।

ननु भवतु लोके पुरुषाभिप्रायवशेनाऽन्यार्थस्याऽपि शब्दस्य लक्षणयाऽन्यपरत्वम्। अपौरुषेये तु वेदे कथमर्थवादशब्दस्य लक्षणयाऽपि प्राशस्त्यपरत्वम्। मैवम्; भवेदेवं यदि वेदे पुरुष-

स्थानीयोऽध्ययनविधिर्न स्यात् । स हि "स्वाध्यायोऽध्येतव्य" इति श्रूयमाणोऽध्ययनभावनाभाव्यमाकाङ्क्षमाणोऽध्ययनं धात्वर्थतया सन्निहितमप्यपुरुषार्थभूतं भाव्यांशे निरस्य करणांशे निवेशयति । ततश्चाऽध्ययनेन पुरुषः समीहितं भावयेदिति स्थिते दृष्टासम्भवे चाऽदृष्टकल्पनावसरात्, 'यच्छ्रुक्यत' इत्युपबन्धाल्लोकावगतशक्त्यनुसारेणाऽध्ययनस्याऽक्षरग्रहणक्रमेण पुरुषाभिलषितार्थज्ञानहेतुत्वदर्शनात्तदेव भाव्यतयाऽनुमन्यते, न तु स्वर्गादिकमदृष्टम् । न च दृष्टे विध्यानर्थक्यान्नाऽर्थज्ञानं विध्यवरुद्धभावनाभाव्यम् । वेदस्याऽध्ययनविधिमन्तरेण अर्थतात्पर्यावधारणासम्भवात् । गुरूच्चारणाधीनं ह्युच्चारणमध्ययनमित्युच्यते । उच्चारणस्याऽर्थपरत्वे शब्दानामर्थपरत्वं सम्भवति, न तूच्चारणमात्रेण ।

ननु लोकव्युत्पत्तिसिद्धमेव शब्दानामौत्सर्गिकमर्थपरत्वं क्वचित्पुरुषदोषादपोद्यते । वेदे त्वपौरुषेये दोषाभावादुत्सर्गसिद्धमनपोदितमस्त्येव किं विधिना ? मैवम्; द्विविधो हि शब्दानामर्थः—केवलो विशिष्टश्च । तत्रौत्सर्गिकेऽपि केवलार्थपरत्वे विशिष्टार्थपरत्वं विशिष्टार्थप्रत्ययसमुद्देशतस्समुच्चारणान्नियतसमभिव्याहारकल्पनात् नाऽन्यतः सिध्यति ।

तथा हि—'गौरश्वः पुरुषो हस्ती'ति परम्परासम्बद्धार्थेष्वपि




पदार्थेषु यदा विशिष्टार्थप्रतीतितात्पर्यकमुच्चारणमुन्नीयते, तदा जघन्यवृत्त्याश्रयणेनाऽपि 'अयं गौः, 'अश्वो वेगवान्' 'पुरुषोऽप्यनियतचेष्टः' 'हस्ती महाबल' इति विशिष्टार्थबोधो भवति। तथाऽनेकार्थेष्वपि अक्षादिशब्देष्वर्थविशेषावधारणं न शब्दस्वभावकृतम्, अनेकरूपवाक्यार्थावगमप्रसङ्गात्। किन्तूच्चारणतात्पर्यकृतमेव।

तथा हि—गौरित्यथमाहेत्युच्चरिते न गोशब्देनाऽर्थप्रत्ययः, किन्तूच्चारणस्य शब्दपरत्वाच्छब्दप्रत्यय एव परं भवति। तेन विशिष्टार्थज्ञानं न शब्दस्वभावकृतम्। नाऽप्युच्चारणस्वभावकृतम्, किन्तु विशिष्टार्थप्रत्ययतात्पर्यकादुच्चारणभेदादेव। तच्चोच्चारणतात्पर्यं यथा लोके पुरुषाभिप्रायवशादुन्नीयते। तथा वेदे विशिष्टार्थज्ञानार्थोच्चारणविधिवशादेव परं प्रतीयत इति दृष्टार्थत्वेऽपि भवत्यध्ययनविधिसाफल्यम्।

ननूच्चारणस्याऽर्थबोधहेतुत्वेऽवगते दृष्टार्थत्वादध्ययनविधेरर्थपरत्वम्। अध्ययनविधौ चाऽर्थपरे उच्चारणादर्थावगतिरित्यन्योन्याश्रयम्। मैवम्; लोकावगतशक्त्यनुसारेण हि दृष्टार्थत्वमङ्गीक्रियते। लोकदृष्ट्या चोच्चारणस्याऽक्षरादिग्रहणक्रमेण समभिव्याहृतपदार्थान्वयज्ञानमुत्पद्यत एव, किन्तु तात्पर्यावधारणप्रमाणाभावादवसीदति। अध्ययनविधेस्तु तात्पर्यावधारणे सति व्यवतिष्ठते। तेना-

ऽयतो लोकानुसारेण शक्त्यवधारणमात्रमध्ययनविधितस्तात्पर्यान्त-धारणमिति नेतरेतराश्रयम् ।

न च वाच्यम्—चिरवृत्तेऽध्ययने मीमांसादिपरिचयोत्तरकाल-मर्थज्ञानं भवति, नाऽध्ययनानन्तरम् । अतः कथं दृष्टत्वादर्थज्ञानार्थ-त्वमध्ययनविधेरिति । यतोऽक्षरादिग्रहणक्रमेण ह्यध्ययनस्याऽर्थ-ज्ञानार्थत्वं, तेन च क्रमेणोत्तरकालमपि स्मृतिसमारूढस्यैव स्वाध्या-यस्याऽर्थावबोधहेतुत्वमविरुद्धम् । न हि लोकेऽपि शब्दश्रवणान-न्तरमेव विशिष्टार्थावबोधः, किन्तु स्मृतिस्थेष्वेव पदेषु न्यायसम्भाव-नासम्भावितान्वयेषु । तथेहाऽपीति नाऽनुपपन्नम् ।

ननु द्वितीयाविभक्तेः कृत्याच्च स्वाध्यायस्याऽध्ययनसाध्यत्वम-वगम्यते । तत्कथमर्थज्ञानस्याऽपि साध्यत्वम् । न ह्येकस्मिन् वाक्ये साध्यद्वयसमावेशस्सम्भवति, वाक्यभेदप्रसङ्गात् । मैवम् ; भवेदेवं यदि विधिमेयमुभयसाध्यत्वं भवेत् । अत्र चैवमर्थावबोधस्यैव सा-ध्यत्वं दृष्टत्वान्न तु स्वाध्यायस्याऽपि, तस्याऽर्थावबोधसमुद्देशिसमु-च्चारणविधेः प्रागनवधारितार्थतात्पर्यस्य कार्यान्तरे च श्रुत्यादिभि-रविनियुक्तस्य निष्प्रयोजनतया साध्यत्वायोगात् । विधितस्त्ववधृते ऽध्ययनस्याऽर्थपरत्वे स्वाध्यायस्याऽर्थपरत्वे सिद्धे तद्व्यक्तिफलं समु-च्चारणं "यैस्तु द्रव्यं चिकीर्ष्यते" ( जै. सू. २. १. ३. ) इति

न्यायात् । वस्तुतः स्वाध्यायसंस्कार एव भवतीत्यर्थसिद्धमेव स्वाध्यायस्य संस्कार्यत्वरूपेण साध्यत्वं द्वितीयया कृत्येन चाऽनूद्यते । तेन विधिमेयमस्य प्रधानकर्मत्वं, अर्थसिद्धं तु गुणकर्मत्वमित्यविरोधः । तदुक्तं वादर्थधिकरणे—( ३. १. ३. ) "इति सिद्धमर्थावबोधार्थमध्ययनं स्वाध्यायसंस्कारश्चे"ति ।

न च वाच्यम्–यथा प्रथममनवगतोपयोगस्याऽप्यग्नेः "अग्नीनादधीते"ति संस्कारविधानम् , तथा स्वाध्यायस्याऽपि प्रथममनवगतोपयोगस्य संस्कारविधिरेवाऽयं भविष्यति । तदुपलब्धेः पश्चादवबोधोपयोगित्वं लिङ्गतो भविष्यतीति । यतो न शब्दस्य स्वभावकृतमर्थपरत्वम् , नाऽप्युच्चारणस्वभावकृतमिति प्रागेवोक्तम् । अस्य तूच्चारणविधेरुभयतात्पर्ये स्फुट एव वाक्यभेदः । आधानसंस्कृतस्य त्वग्नेः "यदाहवनीये जुहोति" ( तै. ब्रा. १. १. १०. ) इति विध्यन्तरस्य विनियोजकस्य विद्यमानत्वान्नाऽयं दोषः । न चेहाऽपि तथा विध्यन्तरमस्तीति वैषम्यम् ।

एवं तावत्सर्वशब्दानामुच्चारणस्य विशिष्टार्थावबोधनतात्पर्यमन्तरेण न विशिष्टार्थज्ञानव्यवस्थेत्युक्तम् । वेदे त्वध्ययनविधिं विनोच्चारणनियमाभावादुच्चारणविप्लवे सति फलशब्दस्याऽङ्गसम्बन्धितयाऽपि उच्चारणसम्भवान्नाऽङ्गप्रधानव्यवस्था । एवं पाठ-

क्रमेणाऽप्यनुष्ठानक्रमः प्रयाजादीनां न स्यात् । तथैकस्मिन्नपि वाक्ये "यो होता सोऽध्वर्युरि" ( तां. ब्रा. २५. ४. ४. ) त्यादौ व्यतिक्रमेणाऽपि योऽध्वर्युस्स होतेत्युच्चारणासम्भवान्न प्रथमावगतत्वेन होतृपदार्थस्वीकारादध्वर्युपदस्य कार्यलक्षणापरत्वम् । एवं विकृतावैन्द्रपञ्चशरावे प्राकृतचतुर्मुष्टिनिर्वापे "चतुरो मुष्टीन्निर्वपती" ( आप. श्रौ. १. १८. २. ) त्यत्र प्रथमावगतसंख्यानुरोधेन मुष्टिबाधो न भवेत् । एवं सकलवेदार्थविप्लव एवाऽऽपद्येत । नियतोच्चारणविधौ स्वर्थपरे सति नैवमाद्युच्चारणविप्लवकृतोऽन्यथार्थावभानदोषः । तथा सति यथोच्चारितेष्वेवाऽर्थतत्परेषु यथासमभिव्याहृतेष्वेव न्यायसम्पादनवशादाकाङ्क्षाद्युपसंहाराद्भवत्यपेक्षितार्थप्रत्ययो नाऽन्यथेति ।

न चाऽन्यथोच्चारितस्याऽवेदत्वादनादिरेवाऽयमुच्चारणनियमः पदोच्चारणनियमवदिति वाच्यम् । असत्यध्ययनविधौ पुरुषेच्छातन्त्रत्वादर्थाभिधानशक्तितन्त्रत्वाच्चोच्चारणस्य तथोच्चावचोच्चारणेनाऽपि सम्भवादुच्चारणनियमानुपपत्तेः । पदे त्वन्यथोच्चारितस्याऽप्रतिपादकत्वाद्युक्तो नियमः । वेदशब्दोऽपि तदा नित्यानुमेयवेदवादिन इवाऽभिधानतन्त्रो वेदयतीति वेदः, न तु स्वाध्यायशब्दवदध्ययनपरतन्त्रः । वेदनं च यथातथोच्चारितादपि भवतीति नोच्चारणनियमहेतुस्सम्भवति । अर्थज्ञानपरे पुनरध्ययनविधौ सम्भवति

गुरूच्चारणाधीनस्यैवोच्चारणस्याऽध्ययनपदार्थत्वात् । अतस्सर्वथा मानान्तराप्राप्तमेवेदमध्ययनस्याऽर्थावबोधकत्वं विधिना ज्ञाप्यत इति । एवञ्च सत्यध्ययनविधिना कृत्स्नस्यैव वेदस्य समीहितार्थावबोधपरत्वे सुस्थितेऽर्थवादानां च मुख्यार्थत्वे तदसम्भवाल्लक्षणाश्रयणम् ।

नन्वक्षरादिग्रहणक्रमेणाऽपेक्षितदृष्टोपयोगमनुसन्धायाऽध्ययन-विधेरपेक्षितार्थावबोधार्थत्वम् । अर्थवादभागे चाऽक्षरग्रहणक्रमेणाऽपि नाऽपेक्षितार्थावबोधस्सम्भवति । अध्ययनविधिवशादपेक्षितार्थाव-बोधे सतीतरेतराश्रयत्वम् । तेन दृष्टार्थावबोधस्याऽव्यापित्वान्न कृत्स्नस्वाध्यायाध्ययनविधेरपेक्षितार्थावबोधार्थत्वं प्रमाणवदिति ।

मैवम् ; विध्युद्देशस्येवाऽर्थवादभागस्याऽपि लोकानुसारेणाऽत एव विधेयप्राशस्त्यलक्षणाश्रयणादपेक्षितार्थावबोधनपरत्वस्य न्याय-सम्पादनापस्थितत्वात् । अतः सिद्धं प्राशस्त्यप्रतिपादनद्वारेण विध्युद्देशैकवाक्यतया प्रामाण्यमर्थवादानामिति ।

तच्च प्राशस्त्यं लक्ष्यमाणं न प्रत्येकं पदैर्लक्ष्यते । एकैकस्मिन् पदे प्राशस्त्यप्रत्ययानुत्पादात् । न हि वायुपदमात्रे प्राशस्त्याव-गतिः । किन्तर्हि ? "वायुर्वै क्षेपिष्ठा देवता" ( तै. सं. २. १. १. ) इति समस्तेषु क्षिप्रफलदातृत्वलक्षणप्राशस्त्यावगतिः ।

प्रयोजनम्—यद्यर्थवादानामप्रामाण्यम्, तदा "अक्ताः शर्करा" ( तै. ब्रा. ३. १२. ५. ) इत्यत्र विशेषोपनायकप्रमाणाभावाद्य-त्किञ्चिदञ्जनसाधनद्रव्योपादानम्। अर्थवादप्रामाण्ये तु "तेजो वै घृतं" ( तै. ब्रा. ३. १२. ५. ) इत्यर्थवादे घृतस्तुतिदर्शनाद्घृतो-पादानमेव।

सूत्रन्तु—"विधिना" विध्युद्देशेन "एकवाक्यत्वात्स्तुत्यर्थेनाऽर्थ-वादाः" प्रमाणं स्युरिति ॥

इति प्रथममर्थवादाधिकरणम् ॥

## अथ द्वितीयं विधिवन्निगदाधिकरणम् ॥

## विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥

( प्रभाकरमतेन विषय ंशयौ )

इह ये विधिवन्निगदा अर्थवादास्त उदाहरणम्। "औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जै वाऽस्मा ऊर्जं पशूनाप्नोत्यूर्जो-ऽवरुद्ध्या" ( तै. सं. २. १. १. ) इति। किमस्य विधिः कार्यः? उताऽस्याऽपि स्तुतिः? इति।

अत्र प्रभाकरेण साक्षात्सङ्गतिलोभेन "औदुम्बरो यूपो भवति उर्ज्जं पशूनाप्नोती"त्युभयमुदाहृत्य विचारितम् ।

( प्रभाकरमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षः—"औदुम्बरो यूपो भवती"ति विधिर्व्यवस्थित एव । "ऊर्जं पशूनाप्नोति"इत्यत्राऽपि विध्यपेक्षितपशुरूपसाध्यदर्शनान्मुख्यार्थत्वे च सम्भवति स्तुत्यर्थत्वायोगात्, प्रयोजनवत्वाच्च विधितात्पर्यं तावत्प्रतिभाति । तथोर्क्छब्दाभिधेयस्यौदुम्बरस्याऽनिर्दिष्टव्यापारस्य पशुसाधनत्वं न सम्भवतीति विधिपक्षेऽपि यूपोत्पत्तिरूपाश्रयलाभायाऽवश्यम्भाविसन्निहितयूपौदुम्बरविधिसापेक्षत्वात् "पशूनाप्नोती"ति वर्त्तमानापदेशप्रतिभातस्य पञ्चमलकारत्वकल्पनादूर्गुदुम्बराद्यर्थवादपदानां च सन्निधानाविशेषादावृत्याऽपि विधिद्वयशेषत्वकल्पनादोषात् एकार्थतात्पर्यमपि स्फुरति । अतस्तात्पर्यसन्देहेनाऽनध्यवसायादप्रामाण्यमिति ।

( प्रभाकरमतेन सिद्धान्तः )

सिद्धान्तस्तु—यद्यपि नियोज्यविशेषणार्थं विध्यपेक्षितसाध्यावभासोऽत्राऽस्ति, तथाऽपि "सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नष्यत" इति न्यायेनैकवाक्यत्वानुग्रहाय यस्मिन् पक्ष एकवाक्य-

त्वमनुरुद्धं भवति, तदेव स्वीकरणीयमित्यनध्यवसायाभावात्, स्तुत्यर्थत्वमेवेति ।

( प्रभाकरमतदूषणम् )

तदेतदविचारितसकलन्यायस्याऽभिधानम् । सर्वत्रैव हि संशयपूर्वो न्यायावतारः । तत्राऽन्यतरपक्षपरित्यागेनाऽन्यतरग्रहणमिति स्थितम् । संशयेन स्वप्रामाण्यमाशङ्क्य सिद्धान्ताभिधाने सर्वत्रैव तथासम्भवात् सकलन्यायेष्वेवाऽप्रामाण्येनैव पूर्वपक्षः प्रसज्येत । तेनाऽत्राऽपि संशये सति विधित्वेन पूर्वपक्षं कृत्वाऽर्थवादत्वं सिद्धान्तयितुमुचितम् । यत्त्वप्रामाण्येन पूर्वपक्षाभिधानं तदसम्बद्धमेव । अतो यथावार्त्तिकमेवेदमधिकरणं वर्णनीयमिति ।

( भाट्टमतेन विषयसंशयौ )

पूर्वत्रानर्थक्यप्रतियोगिनामर्थवादानां विध्येकवाक्यतया प्रामाण्यं प्रतिपादितम् । इदानीं तेषामेव विधिप्रतियोगिनां प्रामाण्यं प्रतिपाद्यते । तत्र "औदुम्बरो यूपो भवति ऊर्जोऽवरुध्या" इत्यत्र सन्देहः—किमयं फलविधिः ? उताऽर्थवादः ? इति ।

( भाट्टमतेन पूर्वपक्षः )

अयमत्र पूर्वपक्षिणोऽभिसन्धिः—यद्यप्यत्रोर्गवरोधस्य फलत्व-

प्रतिपादिका कर्मश्रुतिर्नाऽस्ति, तथाऽपि "औदुम्बरो यूपो भवति" किमर्थमित्याकाङ्क्षायामूर्क्छब्दाभिधेयस्यैव सन्निहितस्य योग्यतया सम्बन्धः। विशेषतो यथा—'रन्धनाय स्थाली' 'मूत्राय यवागूः' तथेहाऽपि तादर्थ्यप्रतिपादिका चतुर्थीश्रुतिः कर्मश्रुतिसमानार्था समस्ति। तेनाऽत्र समभिव्याहारादेव तृतीयान्तस्याऽप्यौदुम्बरत्वस्य यागस्येव स्वर्गकरणत्वेनैव निवेशः, अन्नप्राप्तेः स्वर्गस्येव साध्यत्वेन। न च स्तुतित्वेनैवाऽस्याऽन्वयः, फलार्थत्वेन विध्युपयोगे सति स्तुत्यर्थत्वायोगात्। न चाऽत्र विधिरेव नाऽस्ति, "औदुम्बरो यूपो भवती"त्यत्रौदुम्बरयूपस्य स्वयं भवनायोगादप्रतिपाद्यत्वेनौदुम्बरं यूपं भावयेदिति सिद्धान्तेऽप्यवश्यकल्पनीयत्वात्।

न च चातुर्थगतपर्णमय्यधिकरणेनाऽस्य गतार्थत्वम्। तस्याऽप्यत्रैव तुल्यन्यायतया सिद्धेऽर्थवादत्वेऽपापश्लोकश्रवणस्य रात्रिसत्रन्यायेन विपरिणामकल्पनया फलत्वमाशङ्क्य "द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः" ( जै. सू. ४. ३. १. ) इत्यनेनाऽन्यार्थस्य द्रव्यादेः फलश्रुतिः फलाकाङ्क्षाभावान्न विपरिणमयितुं शक्यत इत्युक्तम्। इह त्वर्थवादत्वमेव गुणफलसम्बन्धनिरासेन प्रतिपाद्यत इत्यपुनरुक्तिः।

नन्वौदुम्बरस्याऽप्यक्रियारूपत्वाद्गुणफलसम्बन्धो वक्तव्यः।

न चाऽसौ सम्भवति, यतः क्रियाश्रितो गुणः फलं साधयति, गुणसाध्या च क्रिया गुणाश्रयः। यथा—दध्नो होमः, गोदोहनस्य प्रणयनम् । न चाऽत्र प्रकृतो याग उदुम्बरसाध्यः । न च यूपसम्बन्धोपस्थिता यूपोत्पत्तिः पशुनियोजनं वाऽऽश्रय इति वाच्यम्, यतः फले गुणविधिः प्रकरणे विहितं विपरिवर्त्तमानं कर्माऽऽश्रयति । यथा—दधिगोदोहनविधिः । न च यूपोत्पत्तिः पशुनियोजनं वा विकृतिविहितम्, प्रकृतौ श्रुतत्वात् । किञ्च लोकावगतसम्बन्धो ह्याश्रयो भवति । यथा दधिगोदोहनयोर्होमप्रणयनक्रिये । अत्र तूदुम्बरस्य यूपसम्बन्ध एव नाऽवगतपूर्वः, यूपस्याऽलौकिकत्वात् । अतः कथं तद्द्वारेण यूपोत्पत्तिपशुनियोजनाश्रयत्वम् । अनेनैव वाक्येन यूपसम्बन्धकरणे च वाक्यभेद इति ।

उच्यते—यूपसम्बन्धोपस्थिता यूपोत्पत्तिः पशुनियोजनं वाऽऽश्रयः । प्रकरणश्रुतेनैवाऽऽश्रयेण भवितव्यम्, नाऽतिदिष्टेनेति किमियं राजाज्ञा ? बुद्धिविपरिवृत्तिर्ह्याश्रयत्वे कारणम् । सा च प्रकरणविहितस्येव चोदकप्राप्तस्याऽपि न विशिष्यते । तेन यत्र गोदोहनादौ प्रकरणविहितमेव लभ्यते, तत्र तथाभूतस्यैवाऽऽश्रयत्वम् । यत्र चोदकप्राप्तं लभ्यते, तत्र चोदकप्राप्तस्यैव । नाऽपि यूपस्याऽलौकिकत्वेनौदुम्बरसम्बन्धो नाऽवगतः । यतो, यदि विशेषेण

प्रकृतक्रत्वपूर्वीययूपसम्बन्धो नाऽवगतः, तदा गोदोहनस्याऽपि प्रकृतापूर्वीयप्रणयनसम्बन्धः पूर्वं नाऽवगत एव । अथ तत्र सामर्थ्यतः सामान्येन पूर्वमवगतः, तदाऽलौकिकत्वेऽपि यूपस्य काष्ठमयत्वं तावदवगतमेव, औदुम्बरस्याऽपि काष्ठमयत्वात्सामान्यसम्बन्धावगमाऽत्राऽपि विद्यत एवेति न विशेषः । तेन गुणफलसम्बन्धविधिरेवाऽयम् । तथा सत्यपूर्वोऽर्थो विहितो भवति । इतरथा त्वनुवादमात्रमनर्थकमनतिप्रयोजनमित्येवं प्राप्ते—

## उक्तं तु वाक्यशेषत्वम् ॥

### ( भट्टमतेन सिद्धान्तः )

अभिधीयते; अयमभिप्रायः—भवेदेवं यदि कर्मश्रुतिव्यतिरेकेणोर्ग्वरोधस्य फलत्वं प्रतीयते । न च रात्रिसत्रन्यायेन कर्मश्रुतिविरहेऽपि फलत्वम् । यूपसम्बन्धनिराकाङ्क्षस्यौदुम्बरत्वस्य फलाकाङ्क्षाविरहेण विपरिणामाभावस्य वक्ष्यमाणत्वात् । न च तादर्थ्यचतुर्थीवशेन रन्धनाय स्थालीतिवत् फलत्वावगतिः, व्यभिचारात् । न हि 'देवाय पुष्पम्, ब्राह्मणाय दुग्धमि'त्यादिषु फलत्वमवगम्यते । किन्तर्हि ? प्रयोजनत्वमात्रम् । तच्च स्तुतिद्वारेणाऽप्यविरुद्धम् । 'रन्धनाय स्थाली'त्यत्र प्रमाणान्तरवशाद्भवतु फलत्वेनैव प्रयोजनविशेष-

निर्णयः । न त्विह तथा प्रमाणान्तरं फलविशेषनिर्णयाय प्रक्रमत इति न फलार्थत्वेनाऽभ्युपयोगस्सम्भवति । भवतु वा यथाकथञ्चित्फलत्वावगतिः, तथाऽपि कथमुदुम्बरत्वस्य क्रियामनाश्रितस्य फलसाधनत्वसम्बन्धः ।

नन्वत्र विकृतौ यूपस्तदुत्पत्तिस्तत्सम्बद्धं पशुनियोजनं च चोदकप्राप्तमस्ति । अतो यूपद्वारेण तदुत्पत्तिः पशुनियोजनं वाऽऽश्रित्य फलं साधयिष्यति । नैवम्; विकृतौ चोदकप्राप्तस्य गुणफलविधावाश्रयत्वायोगात् । तथा हि—उपकारद्वारेण विकृतौ पदार्थप्राप्तिः। प्राकृतश्चोपकारो यथाभूतैः प्राकृतपदार्थैर्जनितस्तथाभूतैरेवाऽत्र जनयितव्यः । न च प्रकृतावुदुम्बरजातिविशिष्टैः पदार्थैरसावुपकारो जनितः । तेन यदि पुरुषार्थत्वेन श्रुतौदुम्बरता प्राकृततरुजातिबाधेन यूपोत्पत्तिं पशुनियोजनं वाऽऽश्रयते, तदा प्राकृतोपकारलाभ एव विकृतौ न भवेत् ।

यत्र पुनः "शमीमय्यः स्रुचो भवन्ती"त्यादिषु तत्परश्शब्द एव प्राकृततरुजातिबाधेन जात्यन्तरं निवेशयति, तत्र तथाभूतस्यैव शब्देन प्राकृतोपकारजनकत्वज्ञानात्तथैव स्वीक्रियते । न चेह तथाभूतोऽन्यः कश्चिच्छब्दोऽस्ति । अस्यैव तु शब्दस्य प्राकृततरुजाति-

बाधेनोदुम्बरताया यूपसम्बन्धप्रतिपादनपरत्वे फलसम्बन्धप्रतिपादनपरत्वे च वाक्यभेदः ।

न चैवं सति पुरुषार्थगोदोहनेन क्रत्वर्थचमसबाधान्न दर्शपूर्णमासोपकारसिद्धिरिति वाच्यम् । यतः प्रकृतौ पदार्थपृष्ठभावेन उपकारकल्पना । तत्र चोपकाराकाङ्क्षी विधिः क्रत्वर्थपुरुषार्थोभयपदार्थनिष्पाद्यं प्रणयनं पश्यन् उभयपदार्थनिष्पाद्यप्रणयनसाध्यमेवोपकारं कल्पयति । वैकृतस्तु विधिः खदिरादिप्रकृतिकयूपसाध्यस्यैव पशुनियोजनस्योपकारसाधनत्वेन क्लृप्तस्यैवाऽतिदेशेनेह प्राप्तत्वात्तथाभूतमेव स्वीकुरुते, न त्वन्यथाभूतम् । तस्योपकारजनकत्वेन तत्राऽनवगतत्वात् । तस्मादुदुम्बरविधिरेवाऽर्थं यूपसम्बन्धेन शमीविधिरिव स्रुक्सम्बन्धेनेति । "ऊर्गुदुम्बर" इत्यादिपदानां "ऊर्जोऽवरुध्या" इत्यन्तानां तु सर्वेषां स्तुतिपरत्वमेवेति । तस्मादेवंविधानामर्थवादत्वमेव, न तु फलविधित्वमिति सिद्धम् ।

न च "निवृत्तिर्वा कर्म्मभेदात्" ( जै. सू. ८. १. २४. ) इत्यष्टमाध्यायगताधिकरणेन विकृतौ गुणफलप्रवृत्तेर्निराकृतत्वादिदमनारम्यमिति वाच्यम् । यतस्तत्र प्रकृतिश्रुतस्य गोदोहनादेर्गुणस्य पुरुषार्थत्वाद्विकृतावतिदेशो निराकृतः । तदुक्तं टुप्टीकायाम्— "यत्क्रत्वर्थं तदतिदिश्यते । न च गोदोहनादीनां क्रत्वर्थता" ( टु. टी.

८. १. १४. पृ. १५९७. पू. सं. ) इति। इह तु विकृतिश्रुतस्यैवोदुम्बरादिगुणस्याऽतिदिष्टाश्रयमासाद्य फले विधानं निराक्रियत इति वैषम्यम् ।

अत एव यैर्विध्यनुपयोगेन पूर्वपक्षं कृत्वा विध्युपयोगेन सिद्धान्तितं तैरतिदिष्टाश्रयो गुणविधिरनिराकृत एव स्यात् । न च विध्युपयोगवर्णनमप्यन्यत्र न कृतम्, तस्यौत्पत्तिकसूत्रविषयत्वेनैव प्रथमपाद एव वर्णितत्वात् । तदुक्तं तत्रैव—

विधावनाश्रिते साध्यः पुरुषार्थो न लभ्यते ।
श्रुतस्वर्गादिबाधेन धात्वर्थः साध्यतां व्रजेत् ॥
विधौ तु तमतिक्रम्य स्वर्गादेः साध्यतेष्यते ।
तत्साधनस्य धर्मत्वमेवं सति च लभ्यते ॥

( श्लो. वा. पृ. २२१ चौ. सं. )

तेन पक्षविकल्पमात्रेण यदुक्तं वार्त्तिककृता तदेव विचार्यत्वेन भ्रान्तैरनुमितमिति नाऽऽदरणीयमेवेति ।

प्रयोजनम्—पूर्वपक्षे गुणफलार्थिनैव परमौदुम्बरो यूपः कार्यः । सिद्धान्ते त्वौदुम्बरतायाः प्राकृतजातिबाधेन क्रत्वर्थत्वान्नित्यमेवौदुम्बरो यूपः कर्त्तव्य इति ।

सूत्रन्तु—एवंविधानां "वाक्यशेषत्वं" अर्थवादाधिकरण एवोक्तमिति ॥

इति द्वितीयं विधिवन्निगदाधिकरणम् ॥

अथ तृतीयं हेतुवन्निगदाधिकरणम् ॥

## हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥

( विषयसंशयौ )

अथ ये हेतुवन्निगदाः "शूर्पेण जुहोति, तेन ह्यन्नं क्रियते" ( श. ब्रा. २. ४. २. २३ ) इत्येवमादयः, तेषु सन्देहः—किं स्तुतिस्तेषां कार्यम् ? उत हेतुः ? इति ।

( प्रभाकरमतेन पूर्वपक्षः )

अत्र प्रभाकरेण सङ्गतिलोभादित्थमधिकरणमुपवर्णितम्—"तेन ह्यन्नं क्रियते" इत्यत्र हिशब्दप्रयोगादन्नकरणस्य शूर्पहोमे हेतुत्वमवगम्यते—यस्मादन्नकरणं शूर्पं, तस्मात्तेन होतव्यम् । अन्नकरणत्वं च दर्वीपिठरादिष्वपि साधारणमिति तैरपि होतव्यम् । एवं च सति हिशब्दस्य हेतुरूपः श्रौतोऽर्थोऽनुगृहीतो भवति, प्रवृत्तिविशेषकरत्वं चेति । अतो हेतुसापेक्षकार्यप्रतिपादकत्वादप्रामाण्यं

चोदनाया इति पूर्वः पक्षः । न चाऽर्थवादाधिकरणेनैव गतार्थत्वम्, तत्र हि सिद्धसाध्यसमभिव्याहारकल्प्यो हेतुभावः प्रधानभूत-कार्यविरोधेन त्यज्यतां नाम । इह तु शब्दावगतत्वाविशेषेण हि-शब्दावगतो हेतुभावः कार्यावगमानुरोधान्न त्यक्तुं शक्यत इति न गतार्थता ।

( प्रभाकरमतेन सिद्धान्तः )

सिद्धान्तस्तु—यद्यपीह हेतुप्रतिपादकः शब्दोऽस्ति, तथाऽपि व्याप्तेः प्रमाणान्तरानवगतत्वान्नाऽत्र हेतुभावो घटते । न च शब्द-बलेनैव हेतुत्वम्, निरपेक्षशब्दावगतस्य कार्यस्य हेत्वपेक्षाभावेन सम्बन्धाभावात् । तेनैवंविधानां स्तुतिद्वारेणैव प्रामाण्यमिति ।

( प्रभाकरमतदूषणम् )

तदेतदसङ्गतम्, अर्थवादाधिकरणगतत्वेनाऽनारभ्यत्वात् । अनेन वा दण्डापूपीयन्यायेनाऽर्थवादाधिकरणस्याऽनारभ्यत्वादिति यत्किञ्चिदेतत् । तस्माद्यथावार्त्तिकमेवेदमधिकरणं वर्णनीयम् ।

( भाट्टमतेन संशयः )

विधिप्रतियोगिकमर्थवादत्वं निरूप्येदानीं हेतुप्रतियोगिकं नि-रूप्यते—किमयं हेतुविधिः ? उताऽर्थवादः ? इति ।

( भाट्टमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः—जुहोतीत्यत्र विधीयमाने होमे हिशब्दोपात्तहेतुत्वानुरोधेन यस्मादन्नकरणत्वं शूर्पे विद्यते, ततः शूर्पं साधनमिति शूर्पसम्बन्धोऽवगम्यते। न च वेदप्रतिपन्नार्थस्य हेत्वपेक्षाविरहादपेक्षावशाच्च शब्दार्थसम्बन्धस्य सम्बन्ध एव हेतोर्नाऽवगत इति वक्तव्यम्। स्वरसतो हेत्वपेक्षाया अभावेऽपि रक्तपटन्यायेनाऽऽकाङ्क्षोत्थापनेनैव हेतुसम्बन्धोपपत्तेः। न चैतदुपपद्यते। न हि होमस्याऽन्नकरणसम्बन्धः केनचिदवगतचरः। न चाऽनवगतसम्बन्धो हेतुर्भवति। तेन यत्र यथोपपद्यते, तत्र तथा कल्पनीयम्। तदा चोपपद्यते हेतुः, यद्यन्नकरणमात्रस्य होमे विनियोगोऽस्ति। तेन श्रुतार्थापत्त्या यदन्नकरणं, तेन होतव्यमिति हेतुसिद्धये विनियोजिका श्रुतिः कल्पनीया। तस्यां च दशायां "शूर्पेण जुहोती"ति एकदेशानुवाद एवाऽयमिति। तथा च सति दर्वीपिठरादीनामप्यन्नकरणत्वात्तैरपि होतव्यमिति।

न च वाच्यम्—"तेन ह्यन्नं क्रियत"इत्येतस्याऽर्थवादत्वानभ्युपगमे कथं वर्त्तमानापदेशरूपस्य "शूर्पेण जुहोती"त्यस्य पञ्चमलकारत्वकल्पनया विधित्वमिति। यतः "तेन ह्यन्नं क्रियत" इति हेतुप्रतिपादनपरेणाऽप्यनेनाऽर्थतोऽन्नकरणरूपस्य प्राशस्त्यस्याऽपि प्रतिपादि-

त्वात् । एतावतैव विधित्वसिद्धेर्न प्राशस्त्यार्थमर्थवादान्तरापेक्षा ।

अथ वा भवतु "तेन ह्यन्नं क्रियत" इत्यर्थवाद एवाऽयं, तदुन्नीतं च "शूर्पेण जुहोती"त्यस्य विधित्वम्, तथाऽप्यन्नकरणत्वरूपेण स्तुतिर्विधिं व्यवस्थापयतीति । 'न निमित्तं विधिरपबाधत' इति न्यायादन्नकरणमेव शूर्पशब्दलक्षितं होमसाधनमिति प्रतिपादयति । यथा रात्रिसत्रे "य एता रात्रीरुपयन्ति ते प्रतितिष्ठन्ति" ( तां० ब्रा० २३. २०. ४. ) इति फलप्रकाशकार्थवादबलेन विधिर्व्यवस्थाप्यमानः प्रतिष्ठाफलक एव व्यवतिष्ठते, न त्वन्यथा । तेनाऽस्याऽर्थवादस्यैव सतोऽन्नकरणमात्रस्य होमसम्बन्धे हेतुत्वेनाऽप्युपयोग इति । तथा च सति यद्यदन्नकरणं तेन तेन होतव्यमिति दर्वीपिठरादेरपि होमसाधनत्वम् । अस्मिन् पक्षे "शूर्पेण जुहोति" इत्यनेनैव वाक्येनाऽन्नकरणमात्रस्य होमे विधानं शूर्पपदं च लक्षणाद्दत्तम् । पूर्वत्र तु श्रुतार्थापत्तिकल्पितेन विधानं शूर्पपदं चैकदेशानुवाद इति । अतो हेतुरेवाऽयम् । तथा च सत्यर्थवादत्वं सोपपत्तिकं भवतीत्येवं प्राप्ते अभिधीयते—

स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य ॥

( भाट्टमतेन सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि श्रुतार्थापत्तिकल्पितेन वचने-

नाऽन्नकरणमात्रस्य होमे विनियोगो भवेत् । न चाऽसौ सम्भवति, कल्पनाहेतोरसम्भवात् । अन्नकरणहेतुकः शूर्पस्य होमसम्बन्धो नोपपद्यत इति चेत्—न; सम्बन्धावगतेरभावात् । आकाङ्क्षादित्रयनिबन्धन हि शाब्दः सम्बन्धो भवति । न च वेदावबोधितशूर्पहोमसम्बन्धे हेत्वपेक्षा समस्ति, येन हेतुसम्बन्धो भवेत् । न च रक्तपटन्यायेनाऽऽकाङ्क्षामुत्थाप्य सम्बन्ध इति वक्तव्यम् । यतस्सती खल्वाकाङ्क्षाऽनुद्भूता पदान्तरेणोत्थाप्यते । यथा—पटस्य रक्तपदेन । इह तु हेत्वपेक्षा शशविषाणवदत्यन्ताऽसती नोत्थापयितुमपि शक्या । अतः कल्पनाबीजाभावान्नाऽन्नकरणमात्रस्य होमसम्बन्धः ।

अभ्युपेत्याऽभ्युच्यते—भवतु वाऽन्नकरणत्वस्य हेतुत्वं, तथाऽपि द्विविधं हि शूर्परूपम् । यत्तण्डुलप्रस्फोटनसमर्थन्तदन्नकरणम् । यत्त्वदृढमसमर्थं तन्नाऽन्नकरणम् । तेन यदन्नकरणं शूर्पं, तेन होतव्यमित्येतावतैवाऽनुपपत्तिप्रशमनादेषैव कल्पना युज्यते । न तु दर्वीपिठरादिसाधारणी । अतः "तेन ह्यन्नं क्रियत" इत्यस्य हेतुविधित्वं तावदनुपपन्नम् । न चाऽस्याऽर्थवादेऽन्नकरणत्वेन स्तुतिदर्शनात्तदनुरोधेन शूर्पशब्देऽन्नकरणमात्रलक्षणा । यतो, न हि यत्र येनाऽऽकारेण स्तुतिर्भवति, तत्र तेनैव रूपेण विधिरिति लोके प्रतीतम् ।

न हि 'युद्धाय देवदत्तमानयाऽतिसुभटोऽसा'विति स्तुतौ यावत्सुभटानयनविधिं लोकाः प्रतिपद्यन्ते । किन्तर्हि ? देवदत्तस्तुतिमेव । तथा शूर्पस्तुत्यर्थत्वमेवाऽस्य प्रत्येतुमुचितम् , न तु यावदन्नकरणविनियोगार्थत्वम् । एवं सत्यर्थवादस्यैव प्राशस्त्यलक्षकत्वं भवति, न तु 'विधौ न परशब्दार्थ' इतिन्यायविरुद्धत्वात् विध्युद्देशवर्त्तिनः शूर्पशब्दस्य । अनिर्दिष्टफले कर्म्मण्यपेक्षावशादार्थवादिकफलसम्बन्धो लोकेऽपि दृष्ट एव । यथे'मां गां क्रीणीहि, बहुक्षीरा हीय'मित्युक्ते बहुक्षीरकाम एव तत्र प्रवर्त्तते । तेनाऽनिर्दिष्टफले रात्रिसत्रे लोकानुसारेणाऽपेक्षावशाद्भवत्वार्थवादिकफलत्वमेव । न चाऽत्र लोकानुसारोऽस्ति । न चाऽवगतशूर्पसम्बन्धे होमे साधनान्तरापेक्षा समस्तीति शूर्पस्तुतिरेवेयमिति ।

प्रयोजनम्–यदि पूर्वः पक्षः, तदा दर्वीपिठरादिभिरपि होतव्यम् । यदि सिद्धान्तस्तदा शूर्पेणैव ।

सूत्रं तु—शूर्पस्य "शब्दपूर्वत्वात्" शूर्पस्यैवेयं "स्तुतिः" । न त्वनेन दर्वीपिठरादेरन्नकरणस्य "चोदनेति"॥

इति तृतीयं हेतुवन्निगदाधिकरणम् ॥

अथ चतुर्थं मन्त्राधिकरणम् ॥

## तदर्थशास्त्रात् ॥

( विषयसंशयौ )

अथेदानीं किं विवक्षितवचना मन्त्राः? उताऽविवक्षितवचनाः? इति। किमर्थप्रकाशनेन याग उपकुर्वन्ति? उतोच्चारणमात्रेण? इति।

( प्रभाकरमतेन पूर्वपक्षः )

अत्र प्रभाकरेण सङ्गतिलोभादित्थमुपवर्णितमधिकरणम्—"उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति" (श. ब्रा. १. १. ६. ८.) इत्यत्र "उरु प्रथा उरु प्रथस्वे"ति मन्त्रस्य यद्यर्थो विवक्षितस्तदा तत्सामर्थ्यादेव लिङ्गात्पुरोडाशप्रथने तस्य विनियोगसिद्धेः "पुरोडाशं प्रथयती"ति तदर्थशास्त्रमविवक्षितार्थं स्यात्। अथ तदर्थशास्त्रं विवक्षितार्थं, तदा मन्त्रस्याऽविवक्षितार्थतेति परस्परव्याघातादप्रामाण्यं चोदनाया इति पूर्वः पक्षः।

( प्रभाकरमतेन सिद्धान्तः )

सिद्धान्तस्तु—किञ्चित्करस्य किञ्चित्कार्ये किञ्चित्क्रियाद्वारेण विनियोगो भवति। यथाऽवघातस्य किञ्चित्करस्य किञ्चित्कार्ये व्रीहौ द्वितीयाभिधेयफलभागितारूपक्रियाद्वारेण। तेन यत्रैतत्त्रितयं

श्रुतितोऽवगम्यते, तत्र श्रुतित एव विनियोगावगमो भवति। इह पुनः "इति पुरोडाशं प्रथयती"ति श्रुतौ इतिकरणेन किञ्चित्करो मन्त्रः प्रतीयते। 'पुरोडाशं प्रथयेदि'ति पुरोडाशप्रथनं किञ्चित्कार्यं प्रकाशनं च किञ्चित्क्रियाविशेषः श्रुतेः। प्रतीयते तु मन्त्रस्याभिधानसामर्थ्यरूपाल्लिङ्गादभिधायकस्य मन्त्रस्य किञ्चित्करता। अभिधेयस्य च प्रथनस्य किञ्चित्कार्यता। अभिधानस्य च प्रकाशनरूपस्य किञ्चित्क्रियात्वमिति। तेन मन्त्रलिङ्गादेव त्रितयोपस्थितेर्मन्त्रलिङ्गमेव पुरोडाशप्रथने मन्त्रविनियोजकम्। तथा च सति "पुरोडाशं प्रथयती"ति श्रुतिरनुवादिकैव।

यत्र तु श्रुत्यैव त्रितयोपस्थितिः, यथा—"ऐन्द्र्या गार्हपत्यमुपतिष्ठत" ( मै. सं. ३. २. ४. ) इत्यैन्द्रीमन्त्रस्य किञ्चित्कार्यता, उपपूर्वस्य तिष्ठतेः प्रकाशनार्थत्वात्, प्रकाशनस्य किञ्चित्क्रियात्वमिति, तत्र श्रुतिरेव विनियोजिका। न चेह मन्त्रलिङ्गस्य विनियोजकत्वाच्छ्रुतेर्वैयर्थ्यम्, अन्वितकार्यप्रतिपादनेनैव प्रयोजनत्वात्। न हि सर्वत्रैवाऽन्वितकार्यप्रतिपादनादन्यत्प्रयोजनमस्ति। अनुवादेऽपि तदव्याहतमेवेति न परस्परव्याघातादप्रामाण्यं चोदनाया इति।

( प्रभाकरमतदूषणम् )

तदेतदसङ्गतम्; परस्परव्याघातहेतोरभावेन पूर्वपक्षाभावात्।

तुल्यबलयोर्हि व्याघातो भवति । मन्त्रस्य तु सामर्थ्यानुसारेण कल्पनीयः श्रुत्या विनियोगः । तदर्थशास्त्रं तु श्रुतिरूपतया स्वत एव विनियोजकम् । तदेवं प्रत्यक्षश्रुतिवशान्मन्त्रस्याऽविवक्षार्थत्वमेव । पूर्वपक्षोक्तः परस्परव्याघातस्तु कुतः ?

न च वाच्यम्—यद्यप्यध्यापनविधिप्रयुक्तमध्ययनं, तथाऽपि नान्तरीयकतया गम्यमानस्याऽर्थस्याऽप्यन्तरङ्गतयाऽध्येत्रधिकारपर्यवसानार्थमपेक्षितस्याऽध्ययनविधिना विवक्षितत्वात् कृत्स्नस्यैव मन्त्रस्य विवक्षितार्थत्वेन भवति व्याघात इति । निर्वापमन्त्रे "देवस्य त्वा सवितुः प्रसव" ( तै. सं. १. १. ४. ) इत्यादीनामविवक्षितार्थानामपि दर्शनात् । न च तेषामर्थवादत्वम्, विध्येकवाक्यताया अभावात् । यथा च तेषामुच्चारणं, हुमादिपदानां चोच्चारणं प्रयोगसमवेतार्थाभावेनाऽदृष्टार्थं, तथा तदर्थशास्त्रेण ताद्रूप्यपरिच्छेदादत्राऽप्यदृष्टार्थमेव मन्त्रोच्चारणमिति युक्तम् ।

भवतु वा मन्त्रस्य विवक्षितार्थत्वे तत्कारित एव मन्त्रविनियोगः, तथाऽपि तदर्थशास्त्रस्य नाऽविवक्षितार्थत्वम् । यतोऽर्थवादाधिकरण एवैतन्निरूपितम्—यद्विधिप्राप्तप्राशस्त्यानुवादकस्याऽप्यर्थवादस्याऽध्ययनविधिवशादनुवादकत्वेनैव विवक्षितार्थत्वम् । अतस्तुल्यन्यायतया तेनैव गतत्वात्तुल्यार्थयोर्मन्त्रतदर्थशास्त्रयोरन्यतर-

स्याऽनुवादकत्वेन विवक्षितार्थत्वे सति यदेतदुन्याघाताभिधानं, तत् पूर्वापरानवहितस्यैवेति यत्किञ्चिदेतदिति यथावार्त्तिकमेवेदमधिकरणं वर्णनीयम् ।

( भाट्टमतेन संशयः )

अर्थवादानां विधेयस्तुत्युपयोगद्वारेण प्रामाण्ये निरूपिते सतीदानीं मन्त्राणां विहितार्थप्रकाशनोपयोगद्वारेण प्रामाण्ये प्रतिपादयितव्ये किं विवक्षितार्था मन्त्राः ? उताऽविवक्षितार्थाः ? इति निरूप्यते ।

( भाट्टमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः—न तावद्विहितार्थप्रकाशनेन मन्त्राणां क्रतूपयोगस्सम्भवति, ध्यानादिभिरपि तदुपपत्तौ मन्त्रवयर्थ्यात्, विपरीतत्वाच्च । अर्थे हि प्रथममवगते तद्वाचकशब्दस्मरणं भवति । स चेदर्थः प्रथममवगत एव, किं मन्त्रेण ? न च मन्त्रस्मारितानुष्ठितेनैव क्रतूपकारस्सिध्यतीति नियमस्सम्भवति । यतो विवक्षितार्थत्वे सति मन्त्राणामवघातादिवन्नियमादृष्टकल्पनोपपत्तिः । न चैषामर्थो विवक्षितः, तदर्थशास्त्रविरोधात् । यदि हि "उरु प्रथा उरु प्रथस्वे"ति मन्त्रो विवक्षितार्थस्स्यात्तदा तदभिधानसामर्थ्यादेव पुरोडाशप्रथने विनियोगसिद्धेरनेन मन्त्रेण "पुरोडाशं प्रथयती"ति विनियोगश्रुति-

रनर्थिका भवेत् । तेनैतदवगम्यते—नैव मन्त्रा विवक्षितार्था इति । तदुक्तं भाष्ये–"साक्षश्चेदन्येन नीयते नूनमक्षिभ्यां न पश्यति" (शा. भा. १. २. ४. पृ. ३९. चौ. सं. ) इति ।

किञ्च क्वचिन्मन्त्रलिङ्गविपरीतेऽर्थे श्रुत्या विनियोगो दृश्यते । यथा—ऐन्द्रीमन्त्रस्य गार्हपत्ये । तदपि मन्त्रस्य विवक्षितार्थत्वे न घटेत । एवं निर्वापमन्त्रे "देवस्य त्वा"दिपदानां प्रयोगासमवेतार्थाना-मवश्यमविवक्षितार्थत्वं वक्तव्यम् । तथा हुमादिपदानां चाऽर्थाभा-वादविवक्षितार्थत्वं सिद्धमेव । तेन यत्राऽप्यर्थोऽवगम्यते, तत्राऽप्य-नुष्ठेयस्मृतेरन्यतः सिद्धत्वेनोक्तत्वादविवक्षितार्थत्वं सिद्धमेव मन्त्रा-णामिति । अतः प्रकरणपठितानामनारभ्याधीतानां च मन्त्राणां यथासम्भवं श्रुतिवाक्यप्रकरणादिविनियुक्तानां प्रधानविधिना स्वरू-पमेवाऽङ्गीकृतम् । तच्च स्वरूपमक्रियारूपत्वाद्यद्यपि नेतिकर्त्तव्यतात्व-मधिकुरुते, तथाऽपि स्वरूपाङ्गत्वार्थमवश्याभ्युपेतव्योच्चारणक्रिया-द्वारेण कारकत्वेनैव स्वीक्रियते । उच्चारणं दृष्टासम्भवाददृष्टार्थमेव प्रयाजादिवदिति ।

नन्वपेक्षितार्थावबोधार्थोऽध्ययनविधिः कृत्स्नस्वाध्यायस्यैव विवक्षितार्थत्वमापादयन् मन्त्रस्याऽविवक्षितार्थत्वे विरुद्ध्येत । मैवम् ; हुमादिवत् स्वाध्यायाविनाशसिध्यर्थमेवाऽध्ययनोपपत्तेः ।

अथ वा मन्त्रभागेऽप्यपेक्षितार्थावबोधार्थ एवाऽध्ययनविधिः। मुख्यार्थत्वं हि शब्दानामौत्सर्गिकम्। तदनुपपत्तौ लाक्षणिकस्याऽपि शाब्दत्वं भवति। तदत्राऽपि तदर्थशास्त्रादिभिर्मुख्यार्थत्वानुपपत्तेः प्रतिपादकत्वेन मुख्यार्थसम्बद्धं स्वरूपमेव मन्त्रा लक्षयन्ति। तच्च स्वरूपं दृष्टासम्भवादुच्चारणद्वारेणाऽदृष्टेनोपकारेण क्रतावुपयुज्यत इति भवत्यत्राऽप्यध्ययनविधेरपेक्षितार्थावबोधपरत्वम्।

ननु भिन्नयोर्हि लक्ष्यलक्षकभावो भवति, यथा प्राशस्त्यार्थवादयोः। इह तु तदेव मन्त्रस्वरूपं लक्ष्यं लक्षकमिति स्वात्मनि वृत्तिविरोधान्न सम्भवति। मैवम्; मन्त्राणामप्युभयरूपस्वीकारात्। यथा ह्यस्य प्रमाणत्वं रूपम्, तथा प्रमेयत्वमप्यस्याऽस्त्येव। तेन प्रमाणत्वेन रूपेण लक्षकत्वं, प्रमेयत्वेन च लक्ष्यत्वमिति किमनुपपन्नम्। एतेन शाब्दाशाब्दयोरनन्वयात्, कथमशाब्दस्य मन्त्रस्य शाब्दक्रतुभावनान्वय इत्येतदपि प्रत्युक्तम्। एकस्यैव मन्त्रस्य प्रतिपाद्यप्रतिपादकरूपेण लक्षणया शाब्दत्वस्योक्तत्वादित्येतत्तदर्थशास्त्रादिभिरविवक्षितार्थत्वेन मन्त्राणामदृष्टार्थत्वमेवेत्येवं प्राप्ते अभिधीयते—

**अविशिष्टस्तु वाक्यार्थः ॥**

( भाट्टमतेन सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि मन्त्राणामविवक्षितार्थत्वं भवेत्। तथा हि—अध्ययनविधिना हि पृथगधीतानां मन्त्राणां क्रतुमध्यगतं चाऽध्ययनं विधीयते। न तत्र स्वरूपज्ञानार्थत्वं, मन्त्रसमाम्नायगतेनैव पाठेन तस्य सिद्धत्वात्। तेन क्रतूपयोगज्ञापनार्थमेव तदिति निश्चीयते। क्रतूपयोगश्च तेषां प्रयाजादिवाक्यवन्नार्थसमर्पणेन, निवृत्तव्यापाराणां तदर्थस्य विधिवाक्यादेवाऽवगतेः। अतः स्वरूपेणैव तेषां क्रतूपयोगो वक्तव्यः। तच्च स्वरूपं स्वयमक्रियात्वाद्यद्यपि नेतिकर्त्तव्यतारूपेण प्रकरणेन गृह्यते, तथाऽपि कारकत्वेन रूपेण ग्रहीतुं शक्यत एव। किं कुर्वतस्तस्य कारकत्वमित्यपेक्षायां, यच्छक्नुयादिति दृष्टशक्त्यनुसन्धाने वाक्यार्थप्रतीतिस्तत्कार्यमुपलक्ष्यते, अनुष्ठेयविहितपदार्थस्मरणं च प्रयोगविधिरपेक्षते। मन्त्रवाक्यार्थश्च प्रतीतस्सन्नेकदेशद्वारेणाऽपि शक्नोति तत्स्मारयितुमिति विहितपदार्थस्मरणफलवाक्यार्थज्ञानमेव कुर्वतां भवति प्रकरणेन कारकतया ग्रहणम्। तेनोच्चारणमेवैषां स्वरूपाभिव्यक्तये प्रयोगकालेऽवश्यकरणीयं, न तु प्रयाजादिवाक्यानामपि प्रकरणग्रहणं, तेषां स्वरूपस्याऽग्रहणादिति विशेषः।

यदि तु स्मृतिफलमपेक्षितं दृष्टमर्थज्ञानं नोपलभ्येत, तदा

केवलाददृष्टफलोच्चारणक्रिययैवाऽस्य कारकत्वं भवेदपि । सति तु परम्परयाऽपि दृष्टलाभे नाऽदृष्टकल्पनोपपत्तिमतीति विवक्षितार्था एव मन्त्रा इति । न च ध्यानादिभिरपि स्मरणोपपत्तौ मन्त्रवैयर्थ्यम् । नियमादृष्टेनैवाऽर्थवत्त्वात् । यथा हि प्रकारान्तरेणाऽपि वैतुष्यसिद्धौ नियमार्थोऽवघातादिविधिरर्थवान् भवति, तथाऽयमपीति नाऽनुपपन्नम् । अतो विवक्षितार्थत्वान्मन्त्राणां न स्वाध्यायाविनाशार्थं मन्त्राध्ययनम् । नाऽपि मुख्यार्थानुपपत्त्या लक्षणया स्वरूपपरत्वम्, किन्तर्हि ? मन्त्राध्ययनमपेक्षितवाक्यार्थावबोधार्थमेव ।

ननु कथं तर्हि सिद्धान्तेऽपि अशाब्दस्य मन्त्रस्य क्रतुभावनया समन्वयः ? तत्र केचिच्छाब्दत्वसिध्यर्थं सिद्धान्तेऽपि लक्षणया स्वरूपपरत्वं वदन्ति । तदयुक्तम् ; मुख्यार्थपरित्यागेन तत्सम्बद्धोपपादकार्थान्तरकल्पना हि लक्षणेति लक्षणातत्त्वम् । न चाऽत्र पूर्वपक्षवादिमत इव सिद्धान्तेऽपि मुख्यार्थपरित्यागोऽस्ति, विवक्षितार्थत्वान्मन्त्राणाम् । किन्तु प्रयोगभावनाऽनुष्ठेयस्मृतिमन्तरेणाऽनुपपद्यमाना प्रकरणाम्नातमन्त्रार्थवत्त्वाय स्मृतिसमर्थं मन्त्रमेव स्मृतिहेतुतयाऽङ्गीकुरुते । तच्च मन्त्रस्याऽशाब्दत्वे न सम्भवतीति तदर्थं श्रुतार्थापत्त्या तत्परशब्दकल्पनमेवोचितम् । विश्वजिदादाविवोपपादकत्वेन तर्कितस्य स्वर्गस्य तत्परशब्दकल्पनेनेति नाऽनुपपन्नम् ।

न च तदर्थशास्त्रादिभिरविवक्षितार्थत्वम्, तदर्थशास्त्रस्यैवाऽभावात् । तत्र "बर्हिर्देवसदनं दामि" ( मै. सं. १. १. २. ) इत्यादौ तावत्तत्सम्भावनैव न समस्ति । यत्राऽपि तत्सम्भावना समस्ति अभ्र्यादानमन्त्रेषु, तत्राऽपि न श्रुतेर्मन्त्रविनियोजकत्वम् । किन्तर्हि ? सामर्थ्यतो मन्त्रास्तदादाने प्राप्ताः, "तां चतुर्भिरादत्त" ( तै.सं.५. १.१.) इति श्रुत्या चतुस्संख्याऽप्यादाने विहिता । तयोश्चैकादानक्रियान्वये सत्यरुणैकहायनीन्यायेन परस्परनियमे सति समुच्चितैरेव चतुर्भिर्मन्त्रैरादानं कर्त्तव्यमिति वाक्यार्थस्सम्पद्यते । तेन चतुस्संख्याश्रवणं तत्र गुणार्थमेव । तदुक्तं सूत्रकारेण—"गुणार्थेन पुनः श्रुतिः" (जै. सू. १. ४. ४१ )इति ।

एवं "इमामगृभ्णन्नशनामृतस्येत्यश्वाभिधानीमादत्त" (तै.सं.५.१.२. ) इत्यादौ च मन्त्रस्य सामर्थ्यतो गर्दभरशनायामपि प्राप्तिर्भवत्येव, तथाऽपि लिङ्गविनियोगस्य श्रुत्यनुमानेन विप्रकृष्टत्वात् "इत्यश्वाभिधानीमादत्त" इति प्रत्यक्षश्रुतिवशादेव मन्त्रस्याऽश्वरशनायां विनियोगान्मन्त्रप्रकरणिनोर्नैराकाङ्क्ष्ये जाते न लिङ्गद्वारेण सामान्यश्रुतिकल्पनम् । अतः प्रत्यक्षश्रुतिरेव मन्त्रविनियोजिकेति । किन्तु विनाऽपि विधिना प्राप्स्यतः किं विधिनेति प्रयोजनगवेषणायां लिङ्गस्य रशनामात्रविषयत्वाद्गर्दभरशनायामपि मन्त्रप्रसक्तौ

तन्निवृत्तिरेव प्रयोजनम् । तदुक्तं ग्रहाधिकरणे—

रूपप्रकरणद्वारा श्रुतिर्यावत्प्रकल्प्यते ।
तावत्प्रत्यक्षया श्रुत्या विधिश्शीघ्रं समाप्यते ॥
अप्राप्तविधिरेवाऽयमतो मन्त्रस्य निश्चितः ।
परिसंख्या फलेनोक्ता न विशेषपुनःश्रुतेः ॥
प्रयोजनं विधेः किं स्यादस्येति तु निरूपणे ।
न गर्द्दभाभिधानीतः फलमन्यन्निवर्त्तनात् ॥ इति ॥

( तं. वा. ३. १. ७. पृ. ७११. पू. सं. )

तदुक्तं सूत्रकृता—"परिसंख्या" ( जै. सू. १. ४. ४२. )। "उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति यज्ञपतिमेव तत्प्रजया पशुभिः प्रथमयती"त्यत्र तु पुरोडाशप्रथनमेवाऽप्राप्तं विधीयते । न च पुरोडाशान्यथानुपपत्त्या प्राप्तत्वात्प्रथनमविधेयम् । अप्रथितेनाऽपि त्वराविशेषवशात् पिष्टकनिष्पत्तिदर्शनात् । प्रथनविधौ तु तस्याऽवश्यकर्त्तव्यत्वान्मन्त्रस्याऽपि लिङ्गतस्तत्प्रकाशकत्वं भवति । उदाहरणान्तराणि भाष्यवार्त्तिकयोरेव सुगमानीति नेह प्रदर्श्यन्ते ।

यत्र पुनः श्रौतविनियोगवशादेव मन्त्रस्य तत्प्राकाशनसामर्थ्यं वृत्त्यन्तरेणाऽपि कल्पनीयम्, तत्रैव श्रुतेर्विनियोजकत्वम् । यथा—

"ऐन्द्या गार्हपत्यमुपतिष्ठत" इति, "धान्यमसि धिनुहि देवानिति दृषदि तण्डुलानावपती"त्यादौ । निर्वापमन्त्रादौ तु "देवस्य त्वा"दिपदानामसमवेतार्थत्वेऽप्येकवाक्यभावबलेनैवम्भूतार्थप्रकाशनेनैव स्मारितानां विधेयार्थानामनुष्ठानमभ्युदयायेति नियमादृष्टमेवाऽत्राऽपि दृष्टानुरोधात्कल्पनीयम् । यथा—प्रोक्षिताभ्यामेवोलूखलमुसलाभ्यामवहतैरेव वितुषैर्व्रीहिभिर्निष्पादितः पुरोडाशोऽपूर्वसाधनमिति प्रोक्षणमपि नियमादृष्टांशपतितम्, तथेहाऽपीति । तेन दृषदादीनामेव परमर्थाभावेनाऽविवक्षितार्थत्वाददृष्टार्थमेव विनियोगः स्वाध्यायरक्षणार्थं चाऽध्ययनविधिना पाठो न त्वन्यत्राऽपीति ।

नन्वेवं भवतु विवक्षितार्थत्वं, प्रामाण्यं तु कथम् ? विध्युद्देशावगतार्थानुवादकत्वेनाऽनधिगतार्थगन्तृत्वाभावात् । नैवम्; न हि प्रतिवेदवाक्यमनधिगतार्थगन्तृत्वलक्षणं प्रामाण्यं व्युत्पादनीयम् । "य एवं विद्वान् पौर्णमासीं यजते" "य एवं विद्वानमावास्यां यजत" ( तै. सं. १. ६. ९. ) इत्यादावनुवादरूपत्वेन तदभावात् । किं तर्हि ? धर्मप्रमित्युपयोगित्वम् । तच्च परम्परया विद्वद्वाक्यस्येव मन्त्रस्याऽस्तीति किमनुपपन्नम् ।

प्रयोजनम्—यद्यविवक्षितार्था मन्त्रास्तदा ध्यानादिभिरेव संस्मृतानामनुष्ठानम् । अथ विवक्षितार्थास्तदा, मन्त्रस्मारितानामेवेति ।

सूत्रन्तु—न हि लौकिकवाक्यानां मन्त्रवाक्यानां च कश्चिद्विशेषोऽस्ति, येन प्रतीयमानोऽप्यर्थो न विवक्ष्यत इति ॥

यो नाम कश्चिदिह सङ्कलितं प्रमेयं
ग्रन्थान्तरे लिखति वा वदति स्वयं वा ।
मत्कर्तृतामननुकीर्त्य स कीर्त्तिलोपात्
निस्सन्ततिर्जगति जन्मशतानि भूयात् ॥

इति चतुर्थं मन्त्राधिकरणम् ॥

इति बालबलभीभुजङ्गापरनाम्नो भवदेवस्य कृतौ
तौतातितमततिलके प्रथमस्याऽध्यायस्य
द्वितीयः पादः ॥



* श्रीः *

## प्रथमाध्यायस्य तृतीयः पादः ॥

### तत्र प्रथमं स्मृत्यधिकरणम् ॥

# धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात् ॥

( विषयसंशयौ )

एवं तावत्कृत्स्नस्य वेदस्य प्रामाण्यमुक्तम् । अथेदानीं यत्र वैदिकं शब्दमुपलभन्ते, अथ च स्मरन्त्येवमयं पदार्थोऽनुष्ठातव्य एतस्मै प्रयोजनायेति, किमसौ तथैव स्यान्नेति भवति विचारणा । यथा—"अष्टकाः कर्तव्याः" "गुरुरुपगन्तव्यः" "तटाकं खनितव्यम्" "प्रपाः प्रवर्तयितव्याः" "शिखाकर्म कर्तव्यमि"ति ।

( प्रभाकरमतेन पूर्वपक्षः )

अत्र प्राभाकरेण सङ्गतिलोभादित्थमधिकरणमुपवर्णितम्—अत्र सर्वेषामेव स्मृतिवाक्यानां यथासम्भवं विध्यर्थवादमन्त्रैकवाक्यता प्रतीयते । तथा हि—"आचान्तेन कर्म कर्तव्यम्" "दक्षिणाचारेण कर्तव्यम्" "यज्ञोपवीतिना कर्म कर्तव्यमि"त्यादिस्मृतिवा-

क्यानां वेदविहितसकलकर्मोद्देशेनाऽऽचमनादिविधानात्सकलविध्युद्देशैकवाक्यत्वम् । तथा "प्रपाः प्रवर्तयितव्याः" इत्यादिस्मृतिवाक्यस्य "स्थलयोदकं परिगृह्णन्ती"ति प्रपास्तावकार्थवादेनाऽऽकाङ्क्षया योग्यतया वैकवाक्यता । एवमष्टकाकर्मणो रात्रिदेवतत्वात् "अष्टकाः कर्तव्या" इति स्मृतिवाक्यस्याऽष्टकाकर्मप्रतिपादकस्य—

"यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम् ।
संवत्सरस्य या पत्नी सा नोऽस्तु सुमङ्गली" ॥

इति मन्त्रेण रात्रिरूपदेवताप्रकाशनेनाऽऽकाङ्क्षया योग्यतया वैकवाक्यत्वम् ।

ननु "यदि रक्षोभ्यो बिभियादेतया निशि यजेते"ति प्रत्यक्षवेदविहितस्यैव निशीष्टिरूपकर्मणो रात्रिकाले विहितस्य विद्यमानत्वात्तत्र कालप्रकाशनेनैव निराकाङ्क्षस्य कथं स्मृत्येकवाक्यत्वम् ।

नैतत्; प्रतिनन्दन्तीति मन्त्रलिङ्गविरोधात् । देवतां हि जनाः पूजादिभिः प्रतिनन्दन्ति, न तु कालम् । दृष्टार्थत्वाच्च, देवताप्रकाशने ह्यनुष्ठेयार्थत्वं भवति, कालस्य चाऽननुष्ठेयत्वाददृष्टार्थत्वम् । कार्यप्रत्यासत्तेश्च साक्षाद्यागशरीरसम्पादकत्वेन देवता कार्यप्रत्यासन्नतरा, न कालः । अतो मन्त्रस्य देवताभूतरात्रिप्रकाशनेन रात्रि-

देवताकाष्टकाकर्मप्रतिपादकस्मृत्येकवाक्यत्वमेव । न चैवं सति नित्यानित्यसंयोगविरोधादसम्बन्धः, स्मृतिपरम्परायाः अपि प्रवाहनित्यत्वेन सम्बन्धोपपत्तेः । स्मृतिश्च निर्मूलत्वादप्रमाणम् । अतश्च तदेकवाक्यतापन्नस्य त्रिविधस्यैव वेदस्याऽप्रामाण्यमिति पूर्वः पक्षः ।

( प्रभाकरमतेन सिद्धान्तः )

सिद्धान्तस्तु—आप्ततराणां मन्वादीनां भ्रान्तिविप्रलम्भाद्यसम्भवादतीन्द्रियार्थविषयत्वेन च प्रत्यक्षादिमूलत्वानुपपत्तेः पारिशेष्यादनुमानसिद्धं वेदमूलत्वमेव । स च वेदः सर्वशाखासु केनाऽप्यनधीयमानत्वेन नित्यानुमेय एव । अतो वेदमूलत्वात्स्मृतीनां तदेकवाक्यत्वेऽपि त्रिविधस्य वेदस्य प्रामाण्यमेवेति ।

( प्रभाकरमतदूषणम् )

तदेतदसम्बद्धम् ; किमत्र पूर्वपक्षी मन्वादिवाक्येष्वपूर्वकार्याभिधानं स्वीकुरुते ? न वा ? न तावत्स्वीकुरुते । यो हि पुंवाक्येषु क्रियाकार्याभिधानमपि नाऽनुमन्यते, स निर्मूलेषु मन्वादिपुरुषवाक्येषु वक्तृज्ञानानुमानेनाऽप्यर्थाप्रतिपादकेष्वपूर्वकार्याभिधानं वदन्नात्ममनोयोगवियुक्त एव प्रतिभाति । अथ न स्वीकुरुते, तदा कथमाचमनादिस्मृतीनामकार्यार्थानां कार्यार्थवैदिकवाक्यैकवाक्यत्वम् ?

कथञ्च 'प्रपाः प्रवर्तयितव्याः' इति स्मृत्या सह स्तुतिद्वारेण 'स्थलयोदकं परिगृह्णन्ती'त्यर्थवादस्यैकवाक्यत्वम् ? कथञ्चाऽष्टकास्मृत्या सह वैदिकमपि निशीष्टिविषयं कार्यं परित्यज्याऽव्यवहितकार्यसम्बन्धलोभेन देवताभूतरात्रिप्रकाशनेन "यां जना" मन्त्रस्यैकवाक्यत्वम् । तस्मात्त्रिविधस्याऽपि वेदस्य स्मृत्यैकवाक्यत्वाभावान्निर्मूलत्वेन स्मृतेरप्रामाण्येऽपि न वेदस्याऽप्रामाण्यमिति पूर्वपक्षस्तावदनुपपन्नः ।

तथा नित्यानुमेयवेदमूलत्वेन सिद्धान्तोऽपि हृदयशून्यस्यैवाऽवभाति । न हि वर्णमात्रं पदमात्रं वा वेदः, किन्तु नियतस्वरानुपूर्वीकमपौरुषेयं वाक्यम् । तत्रैव वेदशब्दप्रयोगात् । न चाऽनुच्चार्यमाणस्य नित्यानुमेयस्य वाक्यस्यैवं रूपत्वं सम्भवति, स्वरक्रमादीनामुच्चारणाधीनत्वात् । अत एव लिङ्गानुमेयाऽपि श्रुतिर्न वेदः । किन्तर्हि ? लिङ्गवन्मन्त्रानुमानाद्वेदसमानता । तेन यद्यावच्छ्रुतार्थापत्त्या कल्प्यते, तत्सकलमनुपपद्यमानशब्दभागाध्ययनस्यैव तात्पर्यम् । तस्माद्वेद इव वेदो न तु वेद इति स्थितिः ।

अथ वा भवतु यथा तथाऽपि वेदत्वं, तथाऽपि पौरुषेयाद्वचना-'देवमयं पुरुषो वेदे'त्यनुमीयते । वक्तृधीहेतुनिश्चयारूचाऽर्थनिश्चय इति भवतो दर्शनम् । स्मृतिवाक्ये चाऽर्थनिश्चयाय वक्तृधीहेत्वनुसन्धाने क्रियमाणे न साक्षादर्थसमर्पको वेदो लभ्यते, किन्तु प्राक्त-

नस्मृतिकारवाक्यमेव । तस्याऽपि वक्तृधीहेतुनिश्चयावधारणापूर्वक-त्वादर्थनिश्चयस्य स्मृतिकारान्तरवाक्यम्, तस्याऽप्येवमित्यन्धपरम्परायां व्यवस्थाहेत्वभावादप्रामाण्यमेव सिद्धान्तेऽपि स्मृतीनामिति यथावार्त्तिकमेवाऽधिकरणं प्रस्तूयते इति ।

( भाट्टमतेन विषयसंशयौ )

अत्र हि चोदनासूत्रे धर्मे वेद एव प्रमाणमिति प्रतिज्ञातम् । इदानीं मन्वादिस्मृतिविहितानामष्टकादिकर्मणां धर्मत्वेन त्रैवर्णिक-परिगृहीतानां प्रमाणभूतवेदानुपलम्भान्न वेदप्रमाणकः कृत्स्नो धर्म इत्याशङ्कायां किमष्टकादयो धर्मा एव न भवन्ति ? अथ वा स्मृति-मूलभूतो वेदोऽस्ति, ततश्च धर्मा एव ? इति चिन्त्यते ।

( भाट्टमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः—न तावदत्र स्मृतिमूलभूतो वेदोऽद्यतनैर्नानाशाखाध्येतृभिरुपलभ्यते । न चैतास्वेव शाखास्व-द्यतनैरनुपलभ्यमानो मन्वादिभिरुपलब्ध इति सम्भावयितुमपि शक्यते । न चाऽनन्तासु शाखासूत्सन्नैवाऽसौ शाखेति कल्प-नोपपत्तिमती, प्रमाणाभावात् । न च वेदैकप्रमाणत्वमेव धर्मस्य स्मृतिमूलशाखोच्छेदकल्पनायां प्रमाणम्, इहाऽष्टकादीनां धर्मत्व-

८

स्यैव विवादास्पदत्वेनैतदधिकरणप्रसाध्यत्वात् । नाऽपि नित्यानुमेयवेदमूलत्वम्, तस्य वेदत्वासम्भवेन पूर्वमेव दूषितत्वात् । नाऽप्यनेकशाखाविप्रकीर्णवेदमूलत्वम्, पठ्यमानशाखासु तथाभूतवेदानुपलम्भात् ।

किञ्च तथा सति विप्रकीर्णवेदापन्यासेनैव निर्विचिकित्सत्रैवर्णिकव्यवहारसिद्धौ स्मृतिनिबन्धनप्रयासवैयर्थ्याच्च । तदुक्तम्—

येन यत्नेन मन्वाद्यैरात्मवाक्यं प्रपाठितम् ।
कस्मात्तेनैव तन्मूलं चोदना न समर्पिता ॥ इति ॥

( तं॰ वा॰ १. ३. १. पृ॰ १६३. पू. सं.)

अतो "धर्मस्य" वेद"शब्दैकमूलत्वाद"विद्यमानमूलभूतवेदशब्दमष्टकादिकं धर्मत्वेनाऽनपेक्षितव्यम्, न भवत्येव धर्म इत्येवं प्राप्ते अभिधीयते—

## अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् ॥

### ( भाट्टमतेन सिद्धान्तः )

अयमभिप्रायः—सर्वथा तावत्सन्निबन्धना मन्वादिस्मृतयः पूर्वविज्ञानपूर्विकाः । तत्र न तावत्स्मृतेर्भ्रान्तिविज्ञानपूर्वकत्वं सम्भवति । भ्रान्तिर्हि कल्प्यमाना न्यायाभासनिबन्धना वा वक्तव्या,

दुःश्रुतशब्दनिबन्धना वा । न च सकलन्यायतत्त्ववेदिषु षडङ्गसकल-वेदाध्यायिषु तथाविधानेकमुनिजनोपास्यमानेषु तदुभयमपि सम्भवति । नाऽपि प्रत्यक्षाद्यनुभवपूर्वकत्वम्, तेषामतीन्द्रियविषयत्वाभावात् । नाऽपि स्मृत्यन्तरपूर्वकत्वम्, तस्याऽपि स्मृत्यन्तरापेक्षत्वेनाऽव्यवस्थया अन्धपरम्परान्यायवदप्रामाण्यात् । तदुक्तम्—

यो यो गृहीतो जात्यन्धः स स्वयं नोपलब्धवान् ।
स्वातन्त्र्येणाऽगृहीते च प्रामाण्यं नाऽवतिष्ठते ॥ इति ॥
( तं. वा. १. ३. १. पृ. १६२. पू. सं. )

नाऽपि विप्रलम्भपूर्वकत्वम्; न ह्येकान्तेन सकलवेदव्यवहारिभिराप्तत्वेनाऽवधारितेषु परमधार्मिकेषु वानप्रस्थव्रतचारिषु तथाविधानेकमुनिप्रश्नानन्तरं धर्मशास्त्रप्रणयनप्रवृत्तेषु निष्कारणं विप्रलम्भार्थमभिधानं शङ्कापदमप्यधिरोहति, सर्वशब्दव्यवहारोच्छेदप्रसङ्गात् । स च विप्रलम्भोऽद्यापि वेदवेदाङ्गविद्भिस्त्रैवर्णिकैरसङ्ख्यातैर्नाऽवधार्यत इति गरीयसी कल्पना । तच्च कल्पनीयं यत्र विरोधो न भवति, अदृष्टान्तरकल्पनञ्च नाऽऽपतति । अतो वेदकारणकमेव पूर्वविज्ञानस्मृतेर्मूलभूतमिति कल्पनीयम् । तदुक्तम्—

भ्रान्तेरनुभवाच्चाऽपि पुंवाक्याद्विप्रलम्भनात् ।
दृष्टानुगुण्यसामर्थ्याच्चोदनैव लघीयसी ॥ इति ॥

( तं. वा. १. ३. १. पृ. १६३. )

ननु योग्यानुपलम्भाद्वेदोऽपि मूलं न भवतीत्युक्तम् । नैवम्; विप्रकीर्णनानाशाखागतत्वेनाऽद्यतनानामुपलम्भयोग्यताभावात् । न ह्यर्वाचीनैः सर्वा वेदशाखा अधीयन्ते । अधीत्य च मीमांस्यन्ते, येन नानाशाखासु क्वचित्प्रधानं क्वचिदङ्गं प्रतीत्य मीमांसया निर्णीय सङ्कलय्ये'दमनेनेत्थं कुर्यादि'ति प्रत्येतुं शक्यते । शक्नुवन्ति तु साङ्गसमस्तवेदाध्यायिनस्तपःप्रभावाहितविज्ञानातिशयशालिनः करतलामलकमिव सकलवेदार्थतत्त्वं निरीक्षमाणा महर्षयो मन्वादय एव । न च स एव वेदः स्मृतिमूलतस्सङ्कलय्य किमिति तैर्नाऽध्यापित इति वक्तव्यम्, क्रमान्यत्वेन स्वाध्यायविनाशप्रसङ्गात् ।

किञ्च न हि सर्वाः स्मृतयो विधिनिषेधश्रुतिमूला एव, अर्थवादमूलानामपि दर्शनात् । तथा हि—"प्राची हि देवानां दिगि" (मा. श. ब्रा. ३. १. १. ६)त्येतदर्थवादमूला स्मृतिः—"न प्रतीचीशिराः शयीते"ति । न चैवम्भूतार्थवादाध्ययनेऽप्येवम्भूतनिषेधोन्नयनमद्यतनानां सम्भवति । तेन मन्दबुद्धीनां लोकानामनध्ययनं पश्यन्तोऽधीतवेदानामपि प्रमादबाहुल्येन विस्मरणमाशङ्कमाना नानाशाखासु कृत्व-

र्थपुरुषार्थविधिनिषेधसङ्कीर्णं तत्तद्वाक्यमधीत्य मीमांसानिरुक्तकल्पनादिभिर्निर्णीय सङ्कलय्य जगदुपकृतये स्वकीर्तिख्यापनाय च स्वनिबन्धनैर्मन्वादय एव वेदार्थमुपदर्शितवन्त इत्येषैव कल्पना ज्यायसीति। तेन भाष्येऽपि यदुक्तं "अथेदानीं यत्र न वैदिकं शब्दमुपलभन्ते" ( शा. भा. १. ३. १. पृ. ४४. चौ. सं ) इति, तदिदानीन्तनपुरुषाभिप्रायम् । "अथ च स्मरन्ती"ति मन्वाद्यभिप्रायमिति ।

प्रयोजनम्—यदि पूर्वपक्षः, तदाऽष्टकादयो नाऽनुष्ठेयाः । सिद्धान्ते त्वनुष्ठेया इति ।

सूत्रन्तु—य एव वेदाध्ययनस्य कर्तारस्त एव स्मृतिनिबन्धनानां मन्वादयः । अतो वेदार्थज्ञानवतां तेषां स्मृतिमूलान्तरेणाऽनुपपद्यमाना सती श्रुतिमूलत्वमेवाऽर्थापत्त्या कल्पयतीति । अनुमानवाचोयुक्तिस्तु पश्चान्मानसाम्येनेति न किञ्चिदनुपपन्नमिति ॥

इति प्रथमं स्मृत्यधिकरणम् ॥

अथ द्वितीयं विरोधाधिकरणम् ॥

## विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम् ॥

( विषयसंशयौ )

यत्र श्रुतिविरोधस्तत्र कथम् ? यथा औदुम्बर्यास्सर्ववेष्टनम्, "औदुम्बरीं स्पृष्ट्वा उद्गायेदि"ति श्रुतिविरुद्धम्। "अष्टाचत्वारिंशतं वर्षाणि वेदब्रह्मचर्यचरणम्" ( बौ. ध. सू. १. ३. १. ) "कृष्णकेशोऽग्नीनादधीते"ति श्रुतिविरुद्धम्। "क्रीतराजको भोज्यान्न"इति "तस्मादग्नीषोमीये संस्थिते यजमानस्य गृहेऽशितव्यं" ( मै. सं. ३. ७. ८. ) इति श्रुतिविरुद्धम्।

( प्रभाकरमतेन पूर्वपक्षः )

अत्र प्रभाकरेण सङ्गतिलोभादित्थमधिकरणमुपवर्णितम्— इह प्रत्यक्षानुमितश्रुत्योः परस्परव्याघातादप्रामाण्यम्। न चाऽग्रोपस्थितया प्रत्यक्षश्रुत्या विलम्बोपस्थितताया अनुमितश्रुतेर्विरोधाद्बाध एवेति वक्तव्यम्। विलम्बभवेनाऽपि ज्वालाभेदग्राहिणाऽनन्यथासिद्धेनाऽनुमानेनाऽग्रोपस्थितस्यापि ज्वालैकत्वग्राहिणः प्रत्यक्षस्याऽन्यथासिद्धस्य बाधदर्शनात्। इह तु प्रत्यक्षानुमितश्रुत्योर्द्वयोरप्यन्यथासिद्धिसम्भावना समस्ति। यथा

हि पौरुषेयत्वेन स्मृतौ भ्रान्त्यादिमूलत्वसम्भावना, तथा वेदेऽप्यु-च्चारणस्य पौरुषेयत्वात् "औदुम्बरीं स्पृष्ट्वोद्गायेदि"ति श्रुतौ नका-रानुच्चारणेन स्पृष्ट्वोद्गायेदिति प्रतीतिसम्भावना समस्त्येव। अतो विनिगमनकारणाभावाद् द्वयोरपि प्रत्यक्षानुमितश्रुत्योरन्यथासिद्धत्व-सम्भावनया न बाध्यबाधकभावः, नाऽपि विकल्पः।

अथ द्वयोरपि श्रुतत्वाविशेषादनन्यथासिद्धत्वम्, तथाऽपि न तावत्तुल्यबलत्वाद्बाध्यबाधकभावस्सम्भवति, नाऽपि विकल्पः। युग-पदुपस्थितयोर्हि प्रयोगविशेषान्वयव्यवस्थया विकल्पो भवति। इह तु प्रथमोपस्थितेनाऽनुपजातविरोधिना सकलप्रयोगव्याप्तेर्विलम्बोप-स्थितेनाऽप्यनन्यथासिद्धेन तथैव व्याप्तेः परस्परव्याघातादप्रामाण्यमे-वेति पूर्वः पक्षः।

( प्रभाकरमतेन सिद्धान्तः )

सिद्धान्तस्तु— भवेदेवं यदि प्रत्यक्षश्रुतिविरोधे स्मृतेः श्रुत्यनु-मानं भवेत्। तदेव तु न सम्भवति। बाधितविषयत्वेनाऽनुमानोदया-सम्भवात्, वह्नाविव शैत्यानुमानोदयस्य। अतः श्रुत्यनुमानासम्भ-वान्न परस्परव्याघातः, किन्तु स्मृतेर्बाध एवेति।

( प्रभाकरमतदूषणम् )

तदेतद्बालजल्पितम्—यदि हि प्रत्यक्षानुमितश्रुत्योरतुल्यबलत्वं तदा बाध्यबाधकभावः । अथ तुल्यबलत्वम् , तदा विकल्प एव । परस्परव्याघातस्तु कुतः ? न च द्वयोरप्यन्यथासिद्धिसम्भावनया परस्परव्याघातः, तत्र प्रत्यक्षश्रुतौ तावन्नकाराद्यनुच्चारणासम्भावनाऽनादिसकलाध्येतृगताध्ययनपरम्परापराहतैव । एवं मन्वादिस्मृतिष्वपि भ्रान्त्यादिमूलत्वसम्भावनाभिधानमनन्तरोक्तस्मृत्यधिकरणसिद्धान्तविस्मरणेन मनोवैक्लव्यमेवाऽभिव्यनक्ति ।

न चानन्यथासिद्धत्वेऽप्यग्रपश्चात्प्रवृत्तयोः प्रत्यक्षानुमितश्रुत्योः सकलप्रयोगव्याप्त्यवगमान्न बाध्यबाधकभावो नाऽपि विकल्प इति वाच्यम् । युगपदुपस्थितयोरपि यवव्रीहिशास्त्रयोरेकैकशास्त्रपर्यालोचनेन सकलप्रयोगव्याप्त्यवगमात् । तदुक्तम्—

"नियमार्थे ह्युभे शास्त्रे यवव्रीह्योर्विधातृणी" इति ।

( तं. वा. १. ३. २. पृ. १७६. )

अथ तत्राऽनन्यथासिद्धशास्त्रद्वयदर्शनात्प्रयोगविधिना विकल्प आश्रीयते, तर्हिहाऽपि समानम् । याऽप्यग्रत उपस्थितिरन्यतरश्रुतेः, साऽप्यध्ययनक्रमेण यवव्रीहिशास्त्रयोरप्यरन्यतरस्याऽविशिष्टेति तयो-




रपि परस्परव्याघातादप्रामाण्यमापद्यतेति यत्किञ्चिदेतत् । सिद्धान्त-युक्तिस्तु भङ्गावसर एव निरसनीयेति यथाभाष्यमेव तावदधिकरणं प्रस्तूयते—

( भाट्टमतेन सङ्गतिः )

पूर्वत्र मन्वादिस्मृतीनां वेदमूलत्वेन प्रामाण्ये निरूपिते इदानीं वेदविरोधे सति तदपोद्यते ।

( भाट्टमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः—न ह्येकमन्वादिप्रणीतानां क्वचिद्वेदमूलत्वं क्वचिद्भ्रान्त्यादिमूलत्वमिति शक्यते वक्तुम् , सर्वत्रैवाऽनाश्वासप्रसङ्गात् । तदुक्तम्—

कदाचिच्छ्रुतिमूलत्वं त्यक्त्वा भ्रान्त्यादिमूलता ।
स्मृतिभिः प्रतिपन्ना चेत्कस्तामिन्द्रोऽपि वारयेत् ॥ इति ॥

( तं. वा. १. ३. २. पृ. १९६ )

तत्राऽपि यदि श्रुतिविरुद्धार्थविषयिणी श्रुतिर्न सम्भवत्येव, तदा न कल्प्येताऽपि । न त्वेवम् ; दृश्यन्ते हि परस्परविरुद्धार्थाः श्रुतयः—उदितहोमानुदितहोमषोडशिग्रहणाग्रहणादिविषयाः सहस्रशः । त-

दुक्तम्--

परस्परविरुद्धत्वं श्रुतीनां न भवेद्यदि ।
स्मृतेः श्रुतिविरुद्धायास्ततो मूलान्तरं भवेत् ।। इति ।।

( तं. वा. १. ३. २. पृ. १७० )

अतः प्रत्यक्षश्रुतिविरुद्धाऽपि स्मृतिः श्रुतिमूलतया प्रमाणमेवेत्येवं प्राप्ते—

( भाट्टमतेन सिद्धान्तः )

अभिधीयते–स्मृतितो हि श्रुतिविज्ञानमानुमानिकं वक्तव्यम् । अनुमानस्य च व्याप्तिपक्षधर्मतावदबाधितविषयत्वमपि सामग्रीमध्यनिविष्टम् । तेन यद्यपि स्मृतिस्वरूपेणाऽष्टकादिस्मृतितः सर्ववेष्टनस्मृतेर्नाऽस्ति विशेषः कश्चित् , तथाऽप्यौदुम्बरीस्पर्शनश्रुतेः प्रत्यक्षत्वेनाऽग्रप्रवृत्तत्वादसर्ववेष्टितैवौदुम्बरी क्रत्वपूर्वसाधनमित्यवरुद्धबुद्धेः पुरुषस्यौदुम्बरीसर्ववेष्टनश्रुत्यनुमानं बाधितविषयत्वादुत्पत्तुमेव नोत्सहते, अग्नाविव प्रत्यक्षावगतोष्णत्वावरुद्धबुद्धेः शैत्यानुमानम् । इतरथा तु "ऐन्द्या गार्हपत्यमुपातिष्ठत" इत्यादिश्रुतिविरोधेऽपि मन्त्रलिङ्गाच्छ्रुत्यमानं प्रसज्येत । तदुक्तम्—"सिद्धेन हि साध्यमुत्पत्तिमुखनिरोधेन बाध्यत इति बाधविदो नैयायिका" इति । न चैवं सत्यनैकान्तिकत्वादष्टकादिस्मृतावपि न वेदानुमानमिति वक्तव्यम् ।

प्रत्यक्षश्रुत्यविरुद्धाया एव स्मृतेर्लिङ्गत्वेनाऽनैकान्तिकत्वाभावादिति। अतः प्रत्यक्षश्रुतिविरुद्धा स्मृतयो न प्रमाणमिति।

प्रयोजनम्—यदि पूर्वःपक्षः, तदा षोडशिग्रहणाग्रहणवद्विकल्पः। सिद्धान्ते तु—स्पर्शनमात्रमनुष्ठेयमिति।

सूत्रन्तु—प्रत्यक्षश्रुति "विरोधे"लिङ्गबाधेन स्मृतिप्रामाण्यं "अनपेक्ष्यं"अनादरणीयम्। यस्मात् "असति" विरोधे स्मृतितो वेदा"नुमानमि"ति॥

इति द्वितीयं विरोधाधिकरणम्॥

अथ तृतीयं दृष्टमूलकस्मृत्यप्रामाण्याधिकरणम्॥

( भाष्यकारमतम् )

## हेतुदर्शनाच्च॥

( विषयसंशयसङ्गतयः )

अधिकरणान्तरं वा। "वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति" "यूपहस्तिनो दानमाचरन्ति" इति, तत्प्रमाणं कर्तृसामान्यादप्रमाणं वा? अत्र पूर्वाधिकरणे सर्ववेष्टनादिहेतुभूतस्य लोभादेरेव दर्शनान्न

सर्ववेष्टनादिस्मृतेः श्रुतिमूलत्वमिति लिङ्गदर्शनपरतया सूत्रं व्याख्यायेदानीमधिकरणान्तरपरतया व्याख्यायते ।

( पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः—भवतूक्तन्यायेन श्रुतिविरुद्धानां सर्ववेष्टनादिस्मृतीनामप्रामाण्यम् । एवमादिस्मृतीनान्तु श्रुतिविरोधाभावात् स्मृत्यधिकरणन्यायेन प्रामाण्यमेवेत्येवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं, यद्यत्राऽपि स्मृतिहेतुभूतो लोभो न सम्भाव्येत । तथाहि—"वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाती" त्यस्यायमर्थः—अग्नीषोमीयप्रणयनार्थविसर्जनहोमकालसम्बन्धियजमानाच्छादनं वासोऽध्वर्युर्गृह्णातीति । तथा "यूपहस्तिनो दानमाचरन्ती" त्यस्याऽर्थो यूपपरिव्याणशाटकमध्वर्यवे दद्यादिति । अत्र च स्पष्ट एव लोभः क्लृप्तः प्रतीयते । कल्पनीया च श्रुतिरिति क्लृप्तलोभमूलत्वमेवैवंभूतस्मृतीनाम् । न चैवं सति तुलापुरुषादिमहादानेष्वाचार्यषष्ठभागग्रहणादिस्मृतीनामपि लोभमूलत्वम्, लोभशून्यस्नानदानोपवासादिप्रतिपादकसंहितान्तर्गततया मन्वादिमहर्षिप्रणीततया लोभमूलत्वासम्भवात् । न चेयमपि तथाभूता । मुक्तकस्मृति-

त्वेन लोभप्रयुक्ताध्वर्युकर्तृकत्वस्याऽपि सम्भावितत्वात् । तस्मादेवं-भूतास्स्मृतयो न प्रमाणमेवेति ।

प्रयोजनं—पूर्वपक्षे स्मृत्यर्थानुष्ठानम्, सिद्धान्ते त्वननुष्ठानमिति ।

सूत्रन्तु—लोभस्यैव हेतुत्वेन "दर्शनात्" न प्रमाणं स्मृतिरिति ॥

( वार्तिककारमतम् )

तदेतद्यथाभाष्यमधिकरणद्वयं सिद्धान्तहेत्वभावाद्वार्तिककार-पादा नाऽनुमन्यन्ते । अयञ्च तेषामभिसन्धिः—विरोधिदर्शनेन ह्य-नुमानं बाधितविषयं भवति । यथा वह्नेरुष्णत्वदर्शनेन शैत्यानुमानम् । यदि तु वह्निरपि शीतोष्णस्वभावो भवतीति सम्भाव्येत, तदा शैत्यानुमानस्याऽपि बाधितविषयत्वं न भवेदेव । विरोधश्च सिद्ध-वस्त्वाश्रयो भवति, एकस्य तदतद्रूपासम्भवात् । कार्यन्तु शास्त्रार्थी-भूतमेकमपि प्रयोगभेदोपपादितविरुद्धानेकसाधनकं दृष्टमेव । यथा उदितानुदितहोमषोडशिग्रहणाग्रहणादिसाध्यम् । अतोऽत्र कार्य-विषयत्वेन सर्ववेष्टनस्पर्शशास्त्रयोर्विरोधाभावादबाधितविषयमनुमान-मुत्पद्यत एवेति ।

अथोच्यते—उदितानुदितहोमषोडशिग्रहणाग्रहणादीनां युग-पदुपस्थितेर्वाशब्दार्थं विकल्पमन्तर्भाव्य पाक्षिक एवाऽन्वयः शास्त्रा-

र्थीभूते कार्ये स्वीक्रियत इत्यविरोधो युक्त एव। इह तु प्रथमाव-गतनिष्प्रतिपक्षश्रौतस्पर्शनेनैव सकलज्योतिष्टोमप्रयोगव्याप्तेर्निर्विषयं सर्ववेष्टनं बाध्यत एवेति।

तदयुक्तम्; तथाहि—केयं युगपदुपस्थितिः? यद्येकज्ञानविषयत्वम्, तन्न; अध्ययनक्रमेणोदितानुदितहोमश्रुत्योरपि भिन्नज्ञानविषयत्वात्। नाऽप्येकदोभयविषयज्ञानत्वम्, ज्ञानयौगपद्यनिषेधात्। नाऽप्येकविनियोगशास्त्रविषयत्वम्, उदितानुदितहोमशास्त्रयोर्भिन्नत्वात्। अथैकप्रयोगशास्त्रविषयत्वम्, तदत्राऽपि समानम्। लोकाचारपर्यन्तनिरीक्षणप्रवृत्तं हि प्रयोगशास्त्रं स्मार्तमेवाऽर्थं परिहरतीति बालजल्पनम्।

अथ युगपदुपस्थितप्रमाणोपनीतत्वमभिमतम्, इह तु जघन्यप्रमाणोपस्थितं विरोधिभूतं सर्ववेष्टनं बाध्यत एवेति। तन्न; असम्भवे हि बलवता दुर्बलं बाध्यते। इतरथा प्रत्यक्षावगतजलसम्बन्धिनः पर्वतस्य धूमानुमितधूमध्वजसम्बन्धबाधनप्रसङ्गात्।

अथ सत्यप्येकपर्वतावयवित्वेऽवयवभेदेन व्यवस्थासम्भवादबाधः, तथाऽत्राऽपि प्रयोगभेदेन व्यवस्थासम्भवान्नाऽनुपपन्नम्। तथा यदप्यग्रप्रवृत्तत्वात्स्पर्शनशास्त्रं सकलप्रयोगव्यापकमुक्तम्। ..........................

तदप्ययुक्तम् ; तथाहि—न तावत्स्पर्शनशास्त्रमेव सकलप्रयोगव्यापित्वमभिधत्ते । न चाऽनभिहितमपि शास्त्रस्वभावादेवाऽवाप्यते, यवव्रीहिशास्त्रयोरपि सकलप्रयोगव्यापित्वेन मिश्रितानुष्ठानसंज्ञात् । किन्तु निष्प्रतिपक्षशास्त्रस्वभावोऽयं वक्तव्यः । स च प्रतिपन्ना निष्प्रतिपक्षत्वावधारणापुरस्सर एवाऽवधारणीयः । न च परस्परविरुद्धार्थानेकश्रुतिदर्शिनः स्पर्शनशास्त्रश्रवणमात्रेण निष्प्रतिपक्षत्वावधारणं सम्भवति । तेन निष्प्रतिपक्षत्वावधारणाप्रवृत्तस्यैव निरूपितवेदमूलमन्वादिप्रणीतानन्यथासिद्धसर्ववेष्टनस्मृतिदर्शिनो निष्प्रतिपक्षत्वावधारणासम्भवात् न सर्वप्रयोगव्यापित्वावधारणसम्भव इति यत्किञ्चिदेतत् ।

अथैवमभिधीयेत—भवेदेतदेवम्, यद्यनन्यथासिद्धाः स्मृतयो भवेयुः । न्यायाभासमूला अपि हि ता निरन्तरं दृश्यन्त एव । यथा "अधीत्य स्नायात्" "अङ्गं वा समभिव्याहारादि" त्येवमादयः । अत्र ह्यध्ययनविधेरर्थज्ञानपर्यन्तत्वेनाऽध्ययनानन्तरं स्नानस्याऽध्ययनविधिविरुद्धत्वादध्ययनविधिपूर्वपक्षन्यायमूलत्वमेव । एवं "पितृयज्ञः स्वकालत्वादि" ( जै. सू. ४. ३. २८ ) इत्यत्र चतुर्थाध्यायाधिकरणे पिण्डपितृयज्ञस्य विश्वजिदादिवत्फलकल्पनया स्वतन्त्राधिकारस्योक्तत्वाद्यदेतद्दर्शकर्माङ्गत्वस्मरणं तदपि पूर्वपक्षन्यायमूलमेव । अतो न्यायाभासमूलत्वस्याऽपि सम्भवात्सम्प्रति

विरोधे स्मृतयो बाध्यन्त एवेति न बाधितविषयमनुमानमुत्प-द्यत इति।

नैतत्; द्वयोरपि श्रुतिमूलत्वात्। तथा हि–ब्रह्मचारिणो ह्यस्नानादिनियमो विहितः। स चाऽवधिसापेक्षः। तस्य स्मृतिकारैरयमवधिरुपदर्शितः "अधीत्य स्नायादि" ति। अधीत्येत्यधिपूर्वस्येण् धातोः प्रयोगः। तेनाऽयमर्थः—अध्ययनविध्यर्थमर्थज्ञानं निष्पाद्य स्नानं कुर्यादित्यध्ययनविधिमूलत्वमेवाऽस्याः स्मृतेः। तदुक्तम्—

इहा स्नानादिनियमो यः कृतो ब्रह्मचारिणः।
अवधित्वमनाश्रित्य सोऽवसानमपेक्षते॥
ततोऽपेक्षावशात्स्नानमस्नानादिनिवर्तनम्।
विरोधसाहचर्याभ्यां दृष्टार्थत्वेन लक्षयेत्॥ इति॥

(श्लो. वा. पृ. ३३ चौ. सं.)

तथा—

ग्रन्थग्रहणमात्रे च कृते स्नानं विरुध्यते।
अधीत्येत्यधिगम्येति व्याख्याने त्वविरोधिता॥ इति॥

(श्लो. वा. पृ. ३२ चौ. सं.)

यत्तु न्यायाभासमूलत्वमुक्तम्, तद्यथाभाष्यमिति मन्तव्यम्।

तथा "तुल्यस्सर्वेषां पशुविधिः प्रकरणाविशेषात्" इतिवत् "अङ्गं वा समभिव्याहारादि"त्यपि व्याख्येयम् ।

तदयमर्थः—दर्शाख्यकर्माङ्गं पितृयज्ञस्स्याद्यदि तेनाऽस्य समभिव्याहारो भवेत् । न चाऽस्य कर्मणा समभिव्याहारः, "अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ती" ति मुख्यकालवचनत्वादमावास्याशब्दस्य कालसभिव्याहारोऽयमिति, तेनैतच्छ्रुतिमूलत्वमेवाऽस्यास्स्मृतेरपीति न किञ्चिदनुपपन्नम् ।

इदन्तु सकलमभ्युपेत्यवादेनोक्तम् । परमार्थतस्त्वर्थापत्तिरेवेयम् । न हि अष्टकादिस्मृतिमूलभूता अपि श्रुतयोऽनुमानगम्याः । तत्प्रतिबद्धलिङ्गविशेषादर्शनात् । यथा चाऽष्टकादिविषयिणी स्मृतिः श्रुतिं विनाऽनुपपद्यमाना श्रुतिं कल्पयति, तथेयमपीति न ततो भिद्यते। न चाऽर्थापत्तेरन्यथाप्युपपत्त्या अन्यथैवोपपत्तिव्यतिरिक्तं दूषणान्तरं सम्भवति ।

न चेह तदस्तीति पूर्वाधिकरण एवोक्तम् । न च दूषणद्वयरहितमनुपपद्यमानं न भवति, तदुपपादकविषयश्च विचारो भवतीत्युत्प्रेक्षितुमपि शक्यम् । तदुक्तम्—

स्मृत्या श्रुतिर्या परिकल्प्यतेऽस्मिन्
लिङ्गादिभिर्या विनियोजिका च ।

फलादिभिर्यत्परिपूरणं च
सम्बन्धदृक्तत्र न काचिदस्ति ॥ इति ॥

( श्लो. वा. पृ० ४७२. चौ. सं. )

अतो न श्रुत्या स्मृतिर्बाध्यत इति सिद्धम् ।

सूत्रन्तु—पूर्वाधिकरणशेषतया वेदविरुद्धबुद्धादिस्मृतिविषय-मेव व्याख्येयम् । तदुक्तम्—

त्रयीमार्गस्य सिद्धस्य ये ह्यत्यन्तविरोधिनः ।
अनिराकृत्य तान्सर्वान् धर्मशुद्धिर्न लभ्यते ॥ इति ॥

( तं. वा० १. ३. २. पृ. १९४ )

तेन प्रत्यक्षया श्रुत्या विरोधिग्रन्थकारिणाम् ।
गर्हिताचरितॄणां च ग्रन्थप्रामाण्यबाधनम् ॥ इति ॥

( तं. वा. १. ३. २. पृ. १९५ )

यत्तु "वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाती"त्यादिस्मृतीनां लोभमूल-त्वादप्रामाण्यमुक्तम्, तदसम्बद्धम्; अविगीतशिष्टाचारोपगृहीतायाः स्मृतेः शिष्टाचारानुमितश्रुतिमूलत्वेनैव प्रामाण्योपपत्तेः । ननु लोभा-दिशून्यो हि शिष्टाचारः प्रमाणमित्यनन्तराधिकरण एव वक्ष्यते । अत्र

तु लोभस्यैव सम्भावितत्वात् कथं श्रुत्यनुमानमिति । मैवम्; स्यादेवं यद्यध्वर्योराचारः प्रमाणमिति वदामः । किन्तर्हि ? यजमानस्य । न चाऽध्वर्युणा लोभतः प्रवर्तितोऽपि परमप्रामाणिको यजमानो मूलप्रमाणगवेषणमन्तरेण प्रवर्तते । स चाऽन्ययावदाचारस्तथैवाऽविगीतः परापरप्रामाणिकैरनुष्ठीयमानस्समस्तीति शक्यते वक्तुम् । यथा तथा सम्भावनामात्रेणाऽप्रामाण्ये तु कुत्र किं सम्भावयितुं न शक्यते । तदुक्तम्—

रागद्वेषमदोन्मादप्रमादालस्यपूर्वताः ।
क्व वा नोत्प्रेक्षितुं शक्याः स्मृत्यप्रामाण्यहेतवः ॥ इति ॥

( तं. वा. १. ३. ३. पृ. १७१ )

तस्मादेवमादिस्मृतीनामपि शिष्टपरिगृहीतानां प्रामाण्यमेवेति । सूत्रन्तु—पूर्ववदेव बौद्धादिस्मृतिविषयं व्याख्येयमिति ॥

इति तृतीयं दृष्टमूलकस्मृत्यप्रामाण्याधिकरणम् ॥

अथ चतुर्थं शिष्टाकोपाधिकरणम् ॥

## शिष्टाकोपेऽविरुद्धमिति चेत् ॥

( विषयसंशयौ )

"आचान्तेन कर्म कर्तव्यम्" "यज्ञोपवीतिना कर्म कर्तव्यम्" "दक्षिणाचारेण कर्म कर्तव्यम्" इत्येवंलक्षणकान्युदाहरणानि। किमेतानि श्रुतिविरुद्धानि न कर्तव्यानि ? उताऽविरुद्धानि कार्याणि वा ? इति ।

( प्रभाकरमतेन विषयसंशयपूर्वपक्षसिद्धान्ताः )

अत्र प्रभाकरेण सङ्गतिलोभादित्थं संशयो दर्शितः—किं "वेदं कृत्वा वेदिं करोति"इत्यादिप्रत्यक्षश्रुतिप्रतिपादितक्रमविरोधेन मध्ये क्षुतादिनिमित्ताचमनादिस्मृतेर्विरोधाधिकरणन्यायेनाऽप्रामाण्यम् । ततश्च तदेकवाक्यतापन्नं प्रयोगशास्त्रमपि अप्रमाणम् । अथ वाऽष्टकादिस्मृतिवत्प्रत्यक्षवेदविरोधाभावात्स्मृत्यधिकरणन्यायेनाऽऽचमनादिस्मृतेर्वेदमूलत्वेन प्रामाण्यम् । ततश्च तदेकवाक्यतापन्नस्य प्रयोगशास्त्रस्य प्रामाण्यमिति । पूर्वपक्षसिद्धान्तयुक्तयस्तु यथाभाष्यमेवेति ।

( प्रभाकरमतदूषणम् )

तदिदमयुक्तम्—स्मृत्यधिकरणोक्तसङ्गतिदूषणेनैव गतत्वात् । यथा हि तत्र पौरुषेयमन्वादिवाक्यस्याऽपूर्वकार्यानभिधायिनोऽपूर्वकार्याभिधायिना वेदवाक्येन सहैकतात्पर्याभावेनैकवाक्यत्वाभावान्मन्वादिस्मृत्यप्रमाण्येऽपि न "यां जना" मन्त्रस्याऽप्रामाण्यम्, तथेहाचमनादिस्मृत्यप्रामाण्येऽपि न प्रयोगशास्त्रस्याऽप्रामाण्यमिति यत्किञ्चिदेवैतदिति, यथाभाष्यमेव तावदधिकरणं वर्ण्यते ।

( भाष्यकारमतेन सङ्गतिसंशयौ )

पूर्वं हि स्मृत्यधिकरणविरोधाधिकरणयोर्वेदाविरोधे विरोधे च क्रत्वर्थपुरुषार्थसाधारणमेव प्रामाण्यमप्रामाण्यञ्च प्रतिपादितम् । इदानीं क्रत्वर्थानामेवाऽऽचमनादिस्मृतीनां किं विरोधाधिकरणन्यायविषयत्वं, ततश्चाऽप्रामाण्यम् ? उत स्मृत्यधिकरणन्यायविषयत्वं, ततश्च प्रामाण्यम् ? इति विषयव्याप्त्यर्थमेवाऽधिकाशङ्कानिराकरणाय न्यायान्तरं प्रस्तूयते ।

( भाष्यकारमतेन पूर्वपक्षः )

तत्र स्मृतिप्रतिपादितौदुम्बरीसर्ववेष्टने सति श्रुतिविहितस्य स्पर्शनस्याऽसम्भवाद्भवतु सर्ववेष्टनस्य श्रुतिविरुद्धत्वम्, इह तु स्मार्ता-

चमनादिप्रवेशेऽपि श्रुति "शिष्टस्य" श्रुतिविहितस्य कस्यचित् "अ-कोपात्" अबाधात् न श्रुतिविरुद्धत्वमाचमनादिस्मृतीनामिति सिद्धान्तेनोपक्रम्य पूर्वपक्षं गृह्णाति—

## न शास्त्रपरिमाणत्वात् ॥

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः—क्रत्वर्थाः खल्वाचमनादिपदार्थाः श्रौतक्रमेयत्ताकालबाधेनैव क्रतुमनुप्रविशन्ति । तथाहि—"वेदं कृत्वा वेदिं करोति" इति श्रुत्यवगतः क्रमः क्षुतादिनिमित्तानामाचमनादीनां मध्यनिवेशे बाधितो भवेत् । तथा यावन्तः पदार्थाः क्रत्वर्थतया श्रुतिविहितास्तेषामियत्ता तदधिकस्मार्ताचमनादिनिवेशे बाधिता स्यात् । एवं प्रयोगविधिबाधितस्य प्रधानप्रत्यासत्तिरूपस्य प्राशुभावात्मकस्याऽपि कालस्य विलम्बहेतुस्मार्ताचमनादिप्रवेशेन बाध उपसम्पद्येत । तदुक्तम्—

शास्त्रेण हि पदार्थानां परिमाणं त्रिधा गतम् ।
क्रमेयत्ताशुनिर्माणरूपं तदिह बाध्यते ॥

( तं॰ वा॰ १॰ ३॰ ३॰ पृ॰ १९७ )

अतः श्रुतिरूपशास्त्रेणैवाऽनुष्ठेयपदार्थपरिमाणस्य कृतत्वात् त-

दधिकस्मार्तपदार्थप्रवेशे सति विरोध एवेति विरोधाधिकरणान्याथविषयत्वमेवाऽऽचमनादिस्मृतीनामित्येवं प्राप्ते अभिधीयते—

## अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥

( भाष्यकारमतेन सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि स्मार्ताचमनादिपदार्थप्रवेशे श्रुतिप्रतिपादितार्थविरोधो भवेत् । क्रमादयो हि प्रयोगोपकरणभूताः प्रयोगविध्यपेक्षया प्रयोगावस्थायामेव सम्बध्यन्ते । प्रयोगविधिश्चापूर्वसिद्धेरनिर्ज्ञातोपायपरिमाणत्वेन श्रुतेः प्रभृति सम्भवद्वेदमूलस्मृत्याचारपर्यन्तमपूर्वसाधनं प्रतीक्षमाणस्तत्प्रतिपादितं पदार्थजातं परिगृह्य तदनुगुणमेव क्रमेयत्ताशुनिर्माणं परिकल्प्य प्रयोगं विदधाति, न त्वग्रत एव श्रौतपदार्थमात्रमेव गृहीत्वा क्रमादिकं कल्पयति, येन पश्चाद्भाविना स्मार्ताचमनादिपदार्थेन विरुध्येत । किञ्चाऽनङ्गं तुल्यकक्ष्यं व्यवधायकं भवति । इह तु क्षुतादिनिमित्तं कर्तृशुचित्वापादमाचमनं सकलपदार्थाङ्गमेव । तेनाऽनाचान्तेन कृता वेदिरेव विगुणी भवेत् । आचान्तेन तु कृता वेदिरेव सगुणीभवतीति न तेन व्यवधानम् । तदुक्तम्—

वेदिरेव ह्यनाचम्य कुर्वतो विगुणी भवेत् ।
तामेव सगुणां कर्तुं शुध्या न व्यवधास्यते ॥

( तं० वा. १. ३. ३. पृ. २०० )

अतो विरोधाभावात्स्मृत्यधिकरणन्यायविषयत्वमेवाऽऽचमनादिस्मृतीनामिति ।

प्रयोजनं पूर्वपक्षे–स्मार्तपदार्थहानम्, सिद्धान्ते तूपादानमिति ।

सूत्रन्तु—स्मृतिकारैः प्रणीतान्येतानि लोभादि "कारणाग्रहणे" प्रमाणानीति "प्रतीयेरन्" ।

( वार्तिककारमतम् )

तदेतद्यथाभाष्यमधिकरणं वार्तिककारपादा नाऽनुमन्यन्ते, पूर्वमेव विरोधे सत्यपि स्मृतिप्रामाण्यप्रतिपादनेनाऽस्य विचारस्याऽनवकाशत्वात् । तेन स्मृत्यधिकरणस्यैवाऽयं कृत्स्नः प्रपञ्चः । तथा हि--"धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात्" (जै.सू. १.३.१.) इत्येतेन स्मृत्याचारयोरेवाऽविद्यमानवेदशब्दत्वादनादरणीयत्वेन पूर्वपक्षं कृत्वा "अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात" ( जै. सू. १.३.२. ) इत्यनुमितवेदमूलत्वेन प्रामाण्यमिति सिद्धान्तितम् ।

( बौद्धग्रन्थानामप्रामाण्यनिरूपणम् )

तत्र स्मृतिप्रामाण्ये सति बौद्धादिस्मृतीनामपि प्रामाण्यमित्याशङ्क्य "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानं" ( जै. सू. १.३.३. ) इत्यनेन वेदाविरुद्धस्मृतीनामेव प्रामाण्यमित्युक्तम् । इदानीं यत्तर्हि वेदाविरुद्धं बौद्धादिस्मृतिवचनं न शिष्टान् कोपयति विहारारामम-ण्डलोकरणवैराग्यध्यानाभ्यासाहिंसासत्यवचनदमदानदयादिविषयं, तत्तर्हि प्रमाणमित्याशङ्कयते "शिष्टाकोपेऽविरुद्धमि"ति ।

अत्रोत्तरम्—"न शास्त्रपरिमाणत्वात्" । परिमितान्येव हि धर्मशास्त्राणि चतुर्दशविद्यास्थानानि वेदव्यवहारिभिर्मन्वादिभिः परिगृहीतानि । तदुक्तम्—

अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः ।
धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश ॥ इति ॥

तेनैतान्येव परं धर्मं प्रति प्रमाणानि । बुद्धादिस्मृतिवचनन्तु घुणाक्षरन्यायेन वेदाविरुद्धमपीदानीन्तननिरूपितासवचनमिवाऽप्रमाणमिति ।

( वार्तिककारमतेन सदाचारप्रामाण्यनिरूपणम् )

एवं स्मृतिविषयसकलशङ्कानिरासे सतीदानीं शिष्टाचारगताशङ्का "अपि वा"इत्यनेन सूत्रेण निरस्यते ।

११

( पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः — यथा बुद्धादिस्मृतीनां वेद-संवादिनीनामपि बहुतरवेदविरुद्धस्मृतिमिश्रितत्वादप्रामाण्यम्, तथा शिष्टाचारस्याऽपि बहुतरवेदविरुद्धाहिच्छत्रब्राह्मणीमद्यपानादिदुराचारमिश्रितत्वेन न वेदानुमानद्वारेण प्रामाण्यम् । किञ्च इतरेतराश्रयात् शिष्टाचारत्वमप्यशक्यनिरूपणमेव । तदुक्तम् —

के शिष्टा ये सदाचाराः सदाचाराश्च तत्कृताः ।
इतीतरेतराधीननिर्णयत्वादनिर्णयः ॥ इति ॥

( तं. वा. १. ३. ३. पृ. २०४ )

ननु—

सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ।
तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥

( मनु. अ. ११. श्लो. ९३. )

इत्येवमादिवचनैर्हि सुरापानं प्रतिषिद्धम् । तच्च लिङ्गनिर्देशात्पुरुषाणामेव प्रतिषिद्धम्, न तु स्त्रीणामपि । न चैवं सति 'ब्राह्मणं न हन्यादि' त्यत्राऽपि पुंस एव ब्राह्मणस्य हननं प्रतिषिद्धम्, न स्त्रिया इति वक्तव्यम् । हननप्रतिषेधे कर्मभूतस्य ब्राह्मण-

स्योद्देश्यत्वेन लिङ्गस्याऽविवक्षितत्वात् । तथा ह्युभयथा तत्र वाक्यार्थः सम्भाव्यते — निषेधरूपो विधिरूपो वा । तत्र निषेधरूपे वाक्यार्थे क्रोधादिनिमित्तब्राह्मणहननकर्तव्यतामनूद्य तद्विषयो नञर्थः प्रतिपाद्यते — यद्ब्राह्मणहननं कुर्यात्तन्नेति । यस्य तु सर्वत्रैकरूपवाक्यार्थलोभेन 'ब्राह्मणं न हन्यादि' त्यत्राऽपि विधिरूप एव वाक्यार्थ इत्यभिमतम् , तस्याऽपि रागतःप्राप्तहननानुवादेन नञर्थ एव विधीयते—'यद्ब्राह्मणहननं तन्न कुर्यादि'ति । तेनोभयथाऽपि ब्राह्मणस्योद्देश्यत्वात्तद्गतविशेषणानामविवक्षितत्वमेव ।

अयं च विधिपक्षो वार्तिककारपादैः सम्भावनामात्रेणोपन्यस्तो विचारासहत्वात् । तथा हि—प्रवर्तकशब्दव्यापारो विधिरित्युच्यते । प्रवृत्तिश्च सर्वत्र क्रियाविषयिणी । तत्कथमक्रियारूपस्य नञर्थस्य विधेयत्वम् ? कथञ्च प्रवृत्तिफलस्य विधेर्निवृत्तिफलत्वम् ?

अथोच्येत निषेधो विधीयत इति नञर्थविषयिणी भावनैव विधीयते । तेनाऽत्राऽपि विधेः क्रियाविषयत्वमेव । तस्यां च भावनायां विधेः प्रवर्तकत्वात्प्रवर्तकत्वमप्यव्याहतम् । सैव च नञर्थविषयभावनायां प्रवृत्तिः पूर्वसङ्कल्पविपरीतत्वान्निवृत्तिरित्युच्यते । निवर्तकत्वमपि पूर्वसङ्कल्पविपरीतप्रवृत्तिजनकत्वमेव, न त्वर्थान्तरम् । अतो निषेधविधिरेवेति ।

तदयुक्तम्; नञर्थस्य भावनाविषयत्वासम्भवात् । भावनानिष्पाद्यं हि भावनाविषयः । न हन्यादित्यत्र तु नञर्थो निषेध्यहननक्रियाप्रागभावः । न चाऽसौ भावनानिष्पाद्यः । किञ्च भाव्योत्पादना हि भावना । सा च विध्यवरुद्धा समीहितमेव भाव्यं गृह्णाति । विषयमपि तदेव स्वीकुरुते, यत्समीहितोपायरूपम् । न चाऽत्र निषेधविधौ समीहितं किञ्चिद्भाव्यमस्ति । न चाऽभावरूपस्य नञर्थस्याऽपि तदुपायत्वं सम्भवतीति यत्किञ्चिदेतत् ।

यत्तु प्रभाकरेण निवृत्तिर्नञर्थ इत्यभ्युपगम्य नञर्थस्य विधेयत्वमुक्तम्, तदपि निवृत्तेरक्रियारूपत्वादेव तावदनुपपन्नम् । किञ्चाऽऽख्यातान्तरसम्बद्धस्य नञो निवृत्त्यर्थत्वानवगतेर्विधिसम्बन्धादेव तदर्थस्य निवृत्तिरूपत्वं वक्तव्यम् । तथा च विधिसम्बन्धान्नञर्थस्य निवृत्तिरूपत्वं, निवृत्तित्वे च सति विधेयत्वमिति वक्तव्यमितीतरेतराश्रयत्वमित्येतदपि यत्किञ्चिदिति ।

ननु निषेधपक्षोऽप्यनुपपन्न एव । एषा हि तत्र वचनव्यक्तिः– 'यद्ब्राह्मणहननं कुर्यात्तन्ने'ति । विधिरप्यत्र रागतः प्राप्तोऽनुवाद्यकोटिनिविष्टः । न चैतत्सम्भवति । यतश्शब्दव्यापाररूपो विधिः स कथं रागतो लभ्यते । तथा विध्यनुवादयोः परस्परविरुद्धत्वाद्विधिरनूद्यत इत्येतदपि व्याहतम् । किञ्चाभाववचनताऽन्यवचनता

विरोधिवचनता वा नञ्शब्दस्याऽवगता । निषेधवचनतायान्तु शक्त्यन्तरकल्पनाऽपि प्रसज्येत । तथा सत्येकस्यैवाऽखण्डस्य नञ्शब्दस्य प्रत्ययसम्बन्धलभ्य एवाऽर्थोऽध्यारोपणीयः स्वात्मन्येव न कुर्यादिति, तच्चाऽनुपपन्नमिति ।

उच्यते — नाऽत्र विधिरस्ति, किन्तु विध्यभिधानसमर्थो लिङ्शब्दो नञर्थस्य विधिविषयत्वासम्भवात् तत्सम्बन्धयोग्यं विधिफलं कुर्यामित्यनागतप्रवृत्तिसङ्कल्परूपमर्थं लक्षयति, गङ्गाशब्द इव तीरम् । स च रागतः प्राप्तत्वादनुवाद्यकोटिनिविष्ट एव । नञ्शब्दोऽप्यत्र न साक्षान्निषेधवचनः, किन्तर्हि विरोधिवचन एव विधिप्रत्ययसम्बद्धस्तत्प्रतिपाद्यं कुर्यामित्यनागतप्रवृत्तिसङ्कल्पविरोधिनं न कुर्यामिति प्रत्ययमादधानो निषेधको भवतीति न नञः शक्त्यन्तरकल्पनम् । नाऽपि स्वात्मन्येव न कुर्यादित्यध्यारोपणमिति निषेधरूप एव वाक्यार्थो युक्तः ।

अन्यथा वा निषेधस्य वाक्यार्थत्वं वर्णयामः — नाऽत्र नञ्शब्दस्य विधिशब्दलक्षितानागतप्रवृत्तिसङ्कल्पविरोधिपरतया निषेधकत्वम्, किन्तु लिङादिविधिशब्दो हि प्रवर्तनारूपं विधिमाचष्टे । तत्समभिव्याहृतश्च नञ्शब्दः तद्विपरीतमर्थं निवर्तनारूपमभिधत्ते, धर्मशब्दसमभिव्याहृत इव तद्विपरीतमधर्मम् । यथा च प्रवर्तना प्रवृ-

त्तिविषयस्य सुखफलत्वं बोधयन्तीच्छोपहारद्वारेण प्रवर्तयति, तथा निवर्तनाऽपि निवृत्तिविषयस्य दुःखफलत्वं बोधयन्ती द्वेषोपहारद्वारेण निवर्तयतीति निषेधार्थः। न चाऽऽख्यातयोगिनो नञ्शब्दस्य निषेधवचनत्वमेव प्रसिद्धम्, विरोधिवचनत्वं तु कुतः? मैवम्; निषेधवचनत्वे शक्त्यन्तरकल्पनाप्रसङ्गात्। किन्तूक्तन्यायेन विरोधिवचनस्यैव सत आख्यातयोगेन निवृत्तिफलत्वान्निषेधकत्वम्, न तु निषेधवाचकत्वमिति।

ननु का पुनरिह निवर्तना? उच्यते—प्रवर्तनाविपरीता हि निवर्तना। प्रवर्तना चेष्टोपायता वा उद्दिष्टपुरुषप्रवृत्तिशब्दव्यापारो वा। तत्र यदा इष्टोपायता प्रवर्तना, तदाऽनिष्टोपायता निवर्तना। यदा चोद्दिष्टपुरुषप्रवृत्तिः शब्दव्यापारः प्रवर्तना, तदोद्दिष्टपुरुषनिवृत्तिः शब्दव्यापार एव निवर्तनेति नाऽनुपपन्नम्। किन्त्वस्मिन् पक्षे विध्याख्यातसमभिव्याहृतस्यैव नञो निवर्तनारूपनिषेधार्थत्वाद्वचनव्यक्तिर्निषेधविधिवादिवदेव 'यद्ब्राह्मणहननं तन्न कुर्यादि'ति। तदत्राऽपि रागतः प्राप्तं ब्राह्मणहननमुद्दिश्य निवर्तनारूपनिषेधोपदेशादुद्देश्यभूतस्य ब्राह्मणस्य लिङ्गादिकमविवक्षितमेवेति। तदुक्तम्—

सर्वथा ब्राह्मणोद्देशान्नेह मुच्यामहे वयम्।
न चोद्दिष्टस्य शक्येते लिङ्गसंख्ये विवक्षितुम्॥ इति॥

( तं. वा. १. ३. ३. पृ. २१२. पू. सं. )

सुरापाने तु "ब्राह्मणो न सुरां पिबेदि"ति ब्राह्मणस्य कर्तृत्वेनोपादानात् उपादेयस्य च "पशुना यजेते"तिवल्लिङ्गस्याऽपि विवक्षितत्वादाहिच्छत्रब्राह्मणीनां सुरापानस्याऽनिषिद्धत्वान्न दुराचारत्वम् । तदुक्तम्—

ततश्चाऽप्रतिषिद्धत्वान्नैव स्त्रीणां विरुध्यते ।
सुरापानमहिच्छत्रब्राह्मण्यस्तेन कुर्वते ॥ इति ॥

( तं. वा. १. ३. ३. पृ. २१२. )

अत्रोच्यते—विधेयविशेषणं हि विवक्षितं भवति, यतो विधेयस्याऽपूर्वशब्दैकवेद्यस्य यावदुपात्तविशेषणग्रहणेन विशिष्टविधेयप्रतीतिपर्यवसाने सत्यन्यतरपरित्यागकारणाभावात्तथाभूतमेव विधेयं विधिर्विवक्षति । अनुवाद्यन्तु नाऽपूर्वशब्दवेद्यम् , किन्तु तत्र विधेयं विधातुं यथाज्ञातमेव शब्देनोपस्थाप्यते । तस्य येन केनचिदुपलक्षणेन यथाज्ञातस्योपस्थितौ सत्यां विधेयारोपितव्यापारो विधिर्नानुवादार्थं विशेषणान्तरं विवक्षितुमुत्सहते , अनाकाङ्क्षितत्वात् । नाऽपि विधानार्थम्, विध्यावृत्तिलक्षणवाक्यभेदप्रसङ्गात् ।

यत्र पुनरनुवाद्यस्याऽपि विशेषणविवक्षामन्तरेणोद्देश्यत्वमेव न सम्भवति, तदसम्भवे च विधिरवसीदन् विशेषणमप्याकाङ्क्षति, तत्राऽनुवाद्यविशेषणमपि विवक्षितमेव । यथा—"यस्योभयं हविरार्ति-

माच्र्छेत्" ( तै. ब्रा. ३. ७. १. ) इत्यत्रोक्तम्—"मृष्यामहे हविषां विशेषणं" ( शा. भा. ६.४.६. सू. २३. ) इति, न त्वन्यत्र । तेन विवक्षायां सर्वत्र विध्यपेक्षैव कारणम्, अविवक्षायां च तदनपेक्षैव । उपादेयत्वोद्देश्यत्वे तु प्रायिके । तदुक्तम्—

नोपादेयत्वमेवैकं विवक्षाकारणं मतम् ।
विशेषणविवक्षायां कारणं हि महाद्विधिः ॥ इति ॥

( तं. वा. १. ३. ३. पृ. २१२ )

तदत्राऽपि 'ब्राह्मणो न सुरां पिबेदि' ति रागतः प्राप्तब्राह्मणकर्तृकसुरापानानुवादेन निषेधोपदेशात्, तस्य च जातिमात्राभिधानेन पर्यवसानान्न लिङ्गादिविवक्षेति स्त्रीणामपि सुरापानं निषिद्धमेवेति । कुर्वते चाहिच्छत्रब्राह्मण्यः सुरापानम् । अतो दुराचारमिश्रितत्वान्नाऽऽचारः प्रमाणमित्येवं प्राप्ते अभिधीयते—

## अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ।

( सिद्धान्तः )

अयमभिप्रायः-न हि सर्वेषां शिष्टकृताचाराणां धर्मप्रामाण्यम्, किन्तर्हि येषु दृष्टं फलं प्रवृत्तिकारणत्वेन नाऽऽश्रितं, ये च धर्मबुध्या क्रियन्ते त एव प्रमाणम् । न हि मूलभूतं वेदमन्तरेण वेदव्यवहा-

रिणामेवैवंविधाचारोऽयमनादिपरम्परासिद्धस्सम्भवति । तदुक्तम्—

दृष्टकारणहीनानि यानि कर्माणि साधुभिः ।
प्रयुक्तानि प्रतीयेरन् धर्मत्वेनेह तान्यपि ॥
शारीरस्थितये यानि सुखार्थं वा प्रयुञ्जते ।
अर्थार्थं वा न तेष्वस्ति शिष्टानामेव धर्मधीः ॥
धर्मत्वेन प्रपन्नानि शिष्टैर्यानि तु कानिचित् ।
वैदिकैः कर्तृसामान्यात्तेषां धर्मत्वमिष्यते ॥ इति ॥

(तं. वा. १. ३. ३. पृ. २१५)

तेनाहिच्छत्रब्राह्मणीसुरापानादीनां न धर्मत्वम्, दृष्टकारण-स्यैव रागस्य प्रवृत्तिहेतुत्वात् । इतरदुराचारोदाहरणानि च वार्तिक-एव सुपरिहराणि ।

यदपि "के शिष्टाः ये सदाचाराः सदाचाराश्च तत्कृता" इत्य-न्योन्याश्रयत्वमुक्तम्, तदप्ययुक्तम्; अन्यतः परिच्छेदसम्भवात् । वेदविहितार्थक्रियाकारित्वं हि शिष्टत्वम् । तच्च प्रत्यक्षावगतस्मृत्य-नुमितवेदार्थक्रियाकारित्वेनाऽत एवाऽवगतमिति नाऽनुपपन्नम् ।

प्रयोजनं—पूर्वपक्षे शिष्टाचारविषयाणां कर्मणामननुष्ठानम् । सिद्धान्ते त्वनुष्ठानमिति ।

सूत्रन्तु—दृष्टफलस्य प्रवृत्ति"कारणत्वाग्रहणे" सति यानि धर्मत्वेन "प्रयुक्तानि" तानि धर्मप्रमाणत्वेन "प्रतीयेरन्" इति ।

( इति सदाचारप्रामाण्यनिरूपणम् )

इति चतुर्थं शिष्टाकोपाधिकरणम् ॥

अथ पञ्चमं यववराहाधिकरणम् ॥

## तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिस्स्यात् ॥

( विषयसंशयौ )

"यवमयश्चरुः" "वाराही उपानहौ" ( मै. सं. ४. ४. ६ ) "वैतसे कटे प्राजापत्यान् सञ्चिनोति" इति यववराहवेतसशब्दान् समामनन्ति । तत्र केचित् दीर्घशूके यवशब्दं प्रयुञ्जते, केचित्प्रियङ्गुषु । वराहशब्दं केचित्सूकरे, केचित्कृष्णशकुनौ । वेतसशब्दं केचिद्वञ्जुले केचिज्जम्ब्वाम् । तत्रोभयथा शब्दार्थावगमाद्विकल्प इति ।

( प्रभाकरमतेन पूर्वोत्तरपक्षौ )

अत्र सङ्गतिलोभात्प्रभाकरेण भाष्यकारीयो विकल्पशब्दोऽनध्यवसायपरो व्याख्यातः । एवं हि मन्यते—निरपेक्षशास्त्रद्वयविहितयोर्हि व्रीहियवयोर्विकल्पो भवति । इह तु "यवमयश्चरुर्भवती"त्ये-

कमिदं वाक्यं नानावृत्तं दीर्घशूकप्रियङ्गुरूपोभयार्थविधायकं सम्भवति। आवृत्तौ च वाक्यभेदापत्तिः। न चैकस्य मुख्यत्वमपरस्य गौणत्वमिति निर्धारयितुं शक्यते विनिगमनाप्रमाणाभावात्। न च वाक्यशेषो विनिगमनाप्रमाणम्, "यवमयश्चरुर्भवति" इत्यत्र वाक्यशेषस्याऽश्रवणात्। किन्तु भाष्यकारमते वारुणप्राघासिकयवमयकरम्भपात्रविधिशेषोऽयमर्थवादः। वर्तिककारमते तु यवमतीभिरद्भिरौदुम्बर्याः प्रोक्षणे विधीयमाने "यत्राऽन्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ती"ति। (श. ब्रा. ३.६. १. १०) तेन यस्मिन्नेवाऽयं श्रूयते, तस्मिन्नेव यागे वाक्यशेषोऽयं यवशब्दस्य दीर्घशूकपरत्वे विनिगमनाप्रमाणम्, न त्वन्यत्राऽपीत्यतोऽत्रानध्यवसायादप्रामाण्यमिति।

( प्रभाकरमतदूषणम् )

तदयुक्तम्; वक्ष्यमाणपूर्वपक्षन्यायेन विकल्पेनैव प्रमाणयोरुपपत्तावप्रामाण्यापादकस्याऽनध्यवसायस्याऽसम्भवादिति यत्किञ्चिदेतदिति यथाभाष्यमेव तावदधिकरणं प्रस्तूयते।

श्रुतिविरोधाविरोधयोः स्मृतीनामप्रामाण्यं प्रामाण्यञ्च निरूप्येदानीं देशभेदेनार्यम्लेच्छयोर्नानार्थविषयैकशब्दप्रयोगरूपाचारविप्रतिपत्तौ कथमिति निरूप्यते।

( भाष्यकारमतेन पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—यववराहवेतसशब्देषु देश-भेदेन नानार्थप्रसिद्धेषूक्तन्यायेन विनिगमनाप्रमाणाभावाद्विकल्प एवेति। न च यवादिपदावृत्तिरूपवाक्यभेदप्रसङ्गान्न विकल्पस्सम्भवतीति वक्तव्यम्। अगत्या वाक्यभेदस्याऽध्ययनविध्यनुमतत्वात्। यथा—"यस्य हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वाऽऽज्येन ता देवताः परिसंख्याय यजेते"ति प्रतिनिमित्तमाज्यविध्यावृत्तिरूपवाक्यभेदोऽध्ययनविध्यनुमत एव। तदुक्तम्—

गौणं लाक्षणिकं वाऽपि वाक्यभेदेन वास्वयम्।
वेदोयमाश्रयत्यर्थं को नु तं प्रतिकूलयेत्॥ इति॥

( तं. वा. १. ३. ४. पृ. २२३ )

अतो विकल्पेनैव पूर्वपक्षो युक्त इत्येवं प्राप्तेऽभिधीयते—

## शास्त्रस्था वा तन्निमित्तत्वात्॥

( भाष्यकारमतेन सिद्धान्तः )

अयमभिप्रायः—भवेददृष्टदोषदुष्टोऽपि विकल्पो यद्युभयाभिधानं भवेत्। इह पुनरन्यतराभिधानेनैवाऽन्यतरस्य सादृश्याद्गौणया-

श्रायगोन प्रतीत्युपपत्तौ नोभयाभिधानम्, शक्तिद्वयकल्पनाप्रमाणाभावात्। अस्ति चाऽन्यतराभिधाने सत्यन्यत्र गौणत्वनिमित्तम्। यतस्सदृशस्तम्बाः प्रियङ्गवो दीर्घशूकाश्च। न चाऽन्यतराभिधाने विनिगमनाप्रमाणं नाऽस्ति, वाक्यशेषस्यैव विनिगमनाप्रमाणत्वात्।

ननु वाक्यशेषो यत्र श्रूयते तत्रैव विनिगमनाप्रमाणमित्युक्तम्। सत्यम्; यत्राऽऽक्तादिपदस्यैव निरूपितैवाऽनेकत्र शक्तिस्तत्रैव। इह वाक्ये कुत्राऽस्य तात्पर्यमिति सन्देहे यत्रैव वाक्यशेषः श्रूयते तत्रैव विनिगमनाप्रमाणं भवति, इह पुनश्शक्तिकल्पनावसरे एकत्र शक्तिकल्पनेनैवाऽन्यत्र प्रतीतिप्रयोगयोरुपपत्तौ शक्तिकल्पनानिर्णायकत्वमेव वाक्यशेषस्येति नाऽनुपपन्नम्। तथा "वराहं गावोऽनुधावन्ति" ( मै. सं. १. ६. ३. ) इत्यर्थवादाद्वराहशब्दस्य पशुविशेषाभिधाने। एवं "अप्सुजो वेतस" इत्यर्थवादाद्वेतसशब्दस्य वृक्षविशेषाभिधाने निर्णायकत्वमिति।

प्रयोजनं—यदि पूर्वः पक्षः, तदा विकल्पेनाऽनुष्ठानम्, अथ सिद्धान्तस्तदा दीर्घशूकादीनामेवेति।

सूत्रन्तु—"शास्त्रस्था" प्रसिद्धिर्बलीयसी अनादिशास्त्र "निमित्तत्वादि"ति ॥

( वार्तिककारमतम् )

तदेतद्यथाभाष्यमधिकरणं वार्तिककारपादा नाऽनुमन्यन्ते। यववराहवेतसशब्देषु सर्वदेशेष्वभिधानविप्रतिपत्त्यनुपलम्भात्। तदुक्तम्—

नैवोच्यन्ते क्वचिद्देशे यवश्रुत्या प्रियङ्गवः।
जम्बूं न वेतसं प्राहुर्वराहं नैव वायसम्॥ इति॥

(तं. वा. १. ३. ४. पृ. २१८)

किञ्च "सन्दिग्धेषु वाक्यशेषान्निर्णय" इत्यनेनैव लभ्यमानत्वादनुपपन्न एवाऽयं विचारः। तदुक्तम्—

सन्दिग्धेषु च सर्वेषु वाक्यशेषेण निर्णयम्।
वक्ष्यत्येव न तेनाऽपि पृथक्कार्या विचारणा॥ इति॥

(तं. वा. १. ३. ४. पृ. २१८)

अथोच्येत—न वयमुदाहरणभेदादधिकरणभेदं ब्रूमः, किन्तु प्रतिपाद्यभेदादेव। तथा हि—"अक्ताश्शर्करा"(तै. ब्रा. ३.१२.५.) इत्यत्र किमञ्जनसाधनमुपादेयमित्युपादनगतस्य सन्देहस्य "तेजो वै घृतम्" इत्यर्थवादबलेन निर्णयः क्रियमाणस्तद्वाक्यगताक्तपदस्यैव क्रियते, न तु वाक्यन्तरगतस्याऽक्तपदस्य। तेनोपादानसन्देहे

समभिव्याहृतविध्युद्देशवर्तिपदगतसन्देहनिर्णायकत्वमेव वाक्यशेषस्येति तदधिकरणप्रतिपाद्यम् । इह पुनः किमत्र यवशब्दस्याऽभिधेयमित्यभिधानसन्देहे वाक्यशेषान्निर्णयः क्रियमाणो यावद्वाक्यगतयवशब्दगोचरामेवाऽभिधानशक्तिं व्यवस्थापयतीति प्रतिपाद्यभेदादधिकरणभेदो युक्त एवेति ।

तदयुक्तम् ; न्यायतुल्यत्वात् । तत्रोपादानसन्देहनिर्णये खल्वयं न्यायः, विधिस्तुत्योस्समानविषयत्वात् स्तुत्यस्यैव विधेयत्वमिति । तथाऽभिधानसन्देहेऽपि दीर्घशूकस्तुतिदर्शनाद्दीर्घशूकस्यैव विधेयत्वम् । तच्चाऽशाब्दस्य न सम्भवतीत्यनधिगतमुख्यभूतार्थान्तरस्य शब्दस्य वाचकशक्तिमेवालम्ब्याऽवतिष्ठते । सर्वस्यैव संशयस्यैकतरपक्षानुग्राहिनिमित्तदर्शनेनैव निवर्तनीयत्वात् । न चोदाहरणभेदेन किञ्चिद्वैलक्षण्ये सत्यधिकरणभेदो भवति । तथा सति "यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणाविभक्तत्वात्" ( जै. सू. ४. १. २. ) इत्यत्राऽपि फलयागयोः पुरुषार्थत्वप्रतिपादनेऽवान्तरहेतुवैलक्षण्यादधिकरणभेदप्रसङ्गः । स्वर्गस्य हि पुरुषार्थत्वं स्वभावादेव, यागस्य तु तत्साधनत्वेन ।

अथ तत्रैकन्यायविषयत्वम्, तदेहाऽप्युपादानसन्देहे स्तुतिसम्बन्धमात्रादेव घृतादीनां विधेयत्वनिर्णयः । अभिधानसन्देहे तु

त्रिकालनिरस्तमुख्यभूतार्थान्तरादर्शनानुगृहीतादेव स्तुतिसम्बन्धादभिधेयं निश्चित्य विधेयनिर्णय इति यत्किञ्चिदेतदिति । तदुक्तम्—

तथाऽपि न्यायतुल्यत्वाद्यथा घृतपरिग्रहः ।
वाक्यशेषात्तथैव स्याद्यवाद्यर्थविनिर्णयः ॥ इति ॥

(तं. वा. १. ३. ४. पृ. २१९ )

न चैवं प्रियङ्गावपि प्रयोगदर्शनादर्थापत्त्या तत्राऽपि शक्तिः कल्पनीयेति वक्तव्यम् । यतस्तत्सिद्धिन्यायेनैव गौणत्वाश्रयणेनैव प्रियङ्गौ प्रयोगस्याऽन्यथा सिद्धत्वेनाऽर्थापत्तेः परिक्षयादिति ।

( वार्तिककारमतेन पील्वधिकरणम् )

( विषयसंशयौ )

अतोऽन्यथैतदधिकरणं वर्ण्यते—अविद्यमानवाक्यशेषा आर्यम्लेच्छप्रयोगविप्रतिपत्तिभाजः पील्वादिशब्दा एवाऽत्रोदाहरणम् । आर्या हि पीलुशब्दं वृक्षविशेषे प्रयुञ्जते । तदाह गौतमः—"पैलवौदुम्बरौ वैश्यस्य दण्डौ" (गौ. ध. १. २३) इति । म्लेच्छास्तु हस्तिनि । तत्र सन्देहः—किं द्वयोरपि पीलुशब्दाभिधेयत्वम् ? उताऽन्यतरस्याऽभिधेयत्वं अन्यतरस्य गौणत्वमिति ?

( पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः—उभावेतावर्थौ पीलुशब्दात्प्रतीयेते । प्रतीतिश्चोभयत्राऽपि शक्तिं कल्पयति, विशेषाभावात् । न च लौकिकशब्दार्थव्यवहारे आर्यम्लेच्छकृतः कश्चिद्विशेषोऽस्ति । न हि घटादिजातीयेष्वार्या एव परं घटशब्दं प्रयुञ्जते, न म्लेच्छा इति शक्यं वक्तुम् । तस्मादेवंविधेषु शब्दार्थव्यवहारेषु वेदविरोधाभावेनाऽऽर्यम्लेच्छयोर्विप्रतिपत्तेस्समत्वात्पील्वादिशब्दानामुभयवाचकत्वमित्येवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—आर्याणामेव प्रसिद्धिर्बलीयसी । शास्त्रस्था हि ते पारमार्थिकशास्त्रार्थानुष्ठानाय पारमार्थिकमेव शब्दार्थमवधारयन्ति । तेन येयमार्याणामनादिशब्दार्थावधारणपरम्परा सैव वाच्यवाचकसम्बन्धावधारणे प्रमाणम् । म्लेच्छानान्तु यादृच्छिकव्यवहारिणां पारमार्थिकशब्दार्थतत्वनिरूपणानभिज्ञानां हस्तिगोचरत्वेनाऽऽर्यप्रयुक्तपीलुशब्दार्थवृक्षस्थूलत्वश्यामलत्वसादृश्याद्गौणपीलुशब्दाश्रयणेन मुख्यत्वभ्रमादेव शब्दस्य व्यवहारोपपत्तौ न पारमार्थिकशब्दार्थाध्यवसानम् ।

तदुक्तम्—

अभियुक्ततरा ये ये बहुशास्त्रार्थदर्शिनः ।
ते ते यत्र प्रयुञ्जीरन् स सोऽर्थस्तत्त्वतो भवेत् ॥ इति ॥

( तं० वा. १. ३. ४. पृ. २२० )

तस्मादार्यप्रसिद्धिरेव शब्दार्थावधारणे प्रमाणम्, न म्लेच्छ-प्रसिद्धिरिति ।

प्रयोजनम्—"पैलवौदुम्बरौ वैश्यस्ये" त्यत्र हस्तिभवास्थिदण्डेन सह पीलुवृक्षदण्डस्य विकल्पः पूर्वपक्षे । सिद्धान्ते तु पीलुवृक्ष-दण्ड एव ।

सूत्रन्तु—ये "शास्त्रस्थाः" तेषामेव प्रसिद्धिर्बलीयसी । तेषामेव शास्त्रार्थानुष्ठानाय शब्दार्थनिरूपणे "निमित्तत्वादि"ति ॥

( इति वार्तिककारमतेन पील्वधिकरणम् )

( वार्तिककारमतेन स्मृत्याचारयोर्बलाबलनिरूपणम् )

( पूर्वपक्षः )

अथवा स्मृत्याचारविरोधविषयमेतदधिकरणम् । अत्राऽयं

पूर्वपक्षिणोऽभिसन्धिः—यथा हि मन्वादिस्मृतीनां श्रुतिमूलत्वं तथा सदाचाराणामपि श्रुतिमूलत्वं निरूपितमेव। तत्र स्मृतिविरुद्धानामप्यदृश्यमानलोभादिमूलानां वेदव्यवहारिभिरेवाऽऽचर्यमाणत्वेन सदाचारत्वाविशेषात् "अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात्" (जै. सू. १. ३. ६) इत्यनेन न्यायेन स्मृतिविरोधेऽपि वेदविरोधाभावेन विप्रतिपत्तेस्समत्वात्सदाचारस्य वेदमूलत्वमेव।

अथवा ऽऽचारस्यैव बलीयस्त्वम्। स हि श्रुत्यनुमाने लिङ्गभूतः प्रत्यक्षेणैवाऽवगम्यते। स्मृतिः पुनर्मनुवचनादनुमिता श्रुतिमनुमापयतीति विप्रकर्षाद्दुर्बला। येषामपि मनुवचनमेव श्रुत्यनुमाने लिङ्गम्, तेषामपि वक्तृज्ञानानुमानद्वारेण श्रुत्यनुमानमिति विप्रकृष्टत्वमेव स्मृतेराचारादिति।

तदुक्तम्—

यावद्धिस्मरणं दृष्ट्वा श्रुतिरन्याऽनुमास्यते।
तावल्लब्धात्मकः पूर्वमाचारः प्रतितिष्ठति॥

प्रतिष्ठितस्य बाधश्च कीदृशः परिकल्प्यताम्।
तेनाऽऽचारबलीयस्त्वं समत्वं वेह युज्यते॥ इति॥

( तं. वा. १. ३. ४. पृ. २२० )

एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि स्मृत्याचारयोस्तुल्यरूपत्वं भवेत् । किन्तु स्मृतिर्भ्रान्त्यादिशून्याप्ततरमन्वादिप्रणीता सोपनिबन्धना चाऽनन्यथासिद्धा वेदमेव मूलभूतं कल्पयतीति युक्तम् । आचारस्य तु वेदव्यवहारिभिर्धर्मबुध्या प्रयुक्तस्याऽपि कालविप्रकर्षात् न्यायाभासादिमूलतया चाऽन्यथाभावशङ्कया न स्मृतिविरोधे प्रामाण्यम् । दृश्यन्ते चाऽग्रत्वेऽपि वेदव्यवहारिणामेव धर्मबोधेऽनाचाराः स्मृतिविरुद्धाः । यथा दाक्षिणात्यब्राह्मणीनामनुमरणम् । तथा च स्मरन्ति—

मृतानुगमनं नाऽस्ति ब्राह्मण्या ब्रह्मशासनात् ।
इतरेषान्तु वर्णानां स्त्रीधर्मोऽयं व्यवस्थितः ॥ इति ॥

न च स्मृतेर्मनुवचनानुमितायाः अप्रत्यक्षत्वेनाऽऽचारस्यैव बलवत्त्वमिति वक्तव्यम्, यतस्स्मृतेः साक्षादेव श्रुत्यनुमानम् । आचारस्य त्वस्मर्यमाणस्याऽनाचरणीयत्वात्तद्विषयं तावदाचरितृस्मरणम्, ततश्चाऽपरापरपूर्वपूर्वभाविनानाविधाचरितृस्मृत्यनुमानपरम्परया मन्वादिस्मृत्यनुमानम्, ततश्च श्रुत्यनुमानमिति बहुतरविप्रकर्षान्न तुल्यबलत्वम्, न तरामाचारबलीयस्त्वमिति ।

तदुक्तम्—

आचारात्तु स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पना ।
तेन व्यन्तरितं तस्य प्रामाण्यं विप्रकृष्यते ॥ इति ॥

( तं॰ वा॰ १. ३. ४. पृ. २२० )

न च मन्वादिस्मृतेरिवाऽऽचरितृस्मृतेरपि साक्षादेव श्रुतिमूलत्वम् । मन्वादयो हि महर्षयः प्रकृष्टज्ञानतया विप्रकीर्णनानाशाखागतां तत्तदाचारमूलभूतां श्रुतिमनुसृत्य स्मृत्वा स्वनिबन्धनैः प्रतिपादयन्तीति युक्तम्, न त्वाचरितारस्सर्वे नानावेदशाखानुसरणक्षमाः । किन्तु मन्वादिमहर्षिसङ्कल्पितमेवाऽर्थं पूर्वपूर्वाचरितृपरम्परायातमवगम्य स्मृत्वाऽऽचरन्तीति सम्भवति । तेन यत्पूर्वाधिकरणे शिष्टाचारस्य श्रुतिमूलत्वेन प्रामाण्यमभिहितं तन्मन्वादिस्मृत्यविरुद्धस्यैवेत्येतदधिकरणव्युत्पाद्यम् । तेन न वक्तव्यं—व्यभिचारास्पदत्वादाचारस्य क्वचिदपि न प्रामाण्यमिति, एवं भूताचारस्याऽव्यभिचारादिति ।

प्रयोजनम्—पूर्वपक्षे स्मृतिविरोधेऽपि यथाचारमनुष्ठानं कर्तव्यम् । सिद्धान्ते तु न कर्तव्यमिति ।

सूत्रन्तु—"शास्त्रस्था" ये मन्वादयस्तेषामेव स्मरणं बलवत् "तन्निमित्तत्वादेव" शिष्टाचारस्येति ॥

( इति स्मृत्याचारयोर्बलाबलनिरूपणम् )

( त्रिवृच्चर्वश्ववालाधिकरणम् )

( पूर्वपक्षः )

अथ वा त्रिवृच्चर्वश्ववालादिशब्दा एवाऽत्र लोकवेदयोर्विप्रतिपत्तौ निरूप्यन्ते । अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः—त्रिवृच्छब्दो हि लोके 'त्रिवृद्रज्जुः, त्रिवृद्ग्रन्थिः' इति त्रिगुणरज्ज्वादौ प्रसिद्धः । वेदे तु "त्रिवृद्बहिष्पवमानं" ( तां. ब्रा. २०. १. १. ) इत्युक्त्वा तृचत्रयं समनुक्रान्तम् । तृचशब्दश्च स्तोत्रीयत्र्यृक्त्रयवचनः । तेन वेदे स्तोत्रीयानवकवचनस्त्रिवृच्छब्दः प्रतीयते । तथा चरुशब्दश्च लोके स्थालीवचनः प्रसिद्धः । वेदे तु "आदित्यः प्रायणीयश्चरुः" इति विधाय "अदितिमोदनेन" इति वचनाद्याज्ञिकप्रसिद्धेश्चाऽनवस्रावितान्तरूष्मपक्वौदनवचनश्चरुशब्दो विज्ञायते । एवं "आश्ववालः प्रस्तर" इत्यत्राऽपि लोकप्रसिध्या अश्ववालस्तुरगकेशः प्रतीयते । वेदे तु काशेष्वश्ववालशब्दप्रसिद्धिः । एवं हि श्रूयते—"यज्ञो वै देवेभ्योऽश्वो भूत्वाऽपाक्रामत,

सोऽपः प्राविशत्, स वालधौ गृहीतो वालानमोचत, ते वालाः काशतां गता" इति । तेन लौकिकवैदिकप्रयोगविप्रतिपत्तौ विनिगमनाहेत्वभावाद्विकल्प एवेति ।

न च लोकप्रसिद्धेर्धर्मं प्रत्यनङ्गत्वाद्वेदप्रसिद्धार्थस्वीकार एव युक्तः, पदार्थावधारणे विशेषाभावात् । तदुक्तम्—

नैतदेवं पदार्थेषु न हि वेदो विशिष्यते ।
अदृष्टार्थे तु वाक्यार्थे लोकात्स व्यतिरिच्यते ॥ इति ॥
( तं. वा. १. ३. ४. पृ. २२२ )

अथ वा लौकिक्येव बलीयसी । सा हि वेदनिरपेक्षैव प्रवर्तते । वेदप्रसिद्धिस्तु वाक्यशेषगतलोकप्रसिद्धपदसमभिव्याहारसापेक्षा । तेन लोकप्रसिद्धेर्बलीयस्त्वाद्यत्र लोकाविरोधस्तत्र भवतु वैदिकार्थस्वीकारः, लोकविप्रतिपत्तौ तु लोकप्रसिद्धार्थस्वीकार एव । तथा सत्यर्थवादस्याऽपि "आदित्यो वै यूपः" "यजमानः प्रस्तरः" ( मै. सं. ३. ८. ६. ) "स्वर्गो लोक आहवनीयः" इतिवद्गौण्या वृत्त्या लौकिकार्थप्रशंसापरत्वमेवेति । तथा शास्त्रस्थमन्वादिप्रसिद्धिरप्येतत्पक्षानुगुणा । यदाह—

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् । ( मनु. २. ४४ )
त्रिवृता ग्रन्थिनैकेन इति च ॥ ( मनु. २. ४३. )

न च लोकप्रसिद्धस्य त्रिवृच्छन्दस्य बहिष्पवमानसामानाधिकरण्यासम्भवेन वैदिकार्थपरिग्रह इति वाच्यम् । यतस्तात्रीयानवकवचनत्वेऽपि बहिष्पवमानस्तोत्रस्य तत्साध्यत्वात्सामानाधिकरण्यानुपपत्तेस्तदवस्थत्वात् । अथ तत्र कार्यकारणयोरैकत्वोपचारात्सामानाधिकरण्यम्, तदत्राऽपि त्रिगुणयज्ञोपवीतस्याऽपि "यज्ञोपवीतिना कर्म कर्तव्यं" इत्यधिकारहेतुत्वात्कार्यकारणभावोपपत्तेर्नाऽनुपपन्नम् । तेनोक्तन्यायेन लोकप्रसिद्धेर्बलीयस्त्वाल्लौकिकार्थपरिग्रह एव । अथ प्रसिद्धितुल्यत्वम्, तदा लौकिकार्थेष्वपि वेदविरोधाभावेन विप्रतिपत्तौ समत्वाद्विकल्प एवेत्येवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्यत्र लौकिकवैदिकपदार्थयोस्तुल्यत्वं भवेत् । अपूर्वसिध्यर्थं हि वेदार्थानुष्ठानम् । तत्र वाक्यार्थवत्पदार्थोऽपि यत्र वेदनैव प्रतिपादितोऽस्ति, तत्र वैदिकपदार्थानुष्ठानादेवाऽपूर्वसिद्धिः । अन्यथा वेदस्य तत्पदार्थप्रतिपादनवैयर्थ्यप्रसङ्गात् । यत्र पुनर्वैदिकः पदार्थो नाऽस्ति तत्र लौकिकपदार्थानुष्ठानादेवाऽपूर्वसिद्धिर्वेदानुमतेति युक्तम् । तदत्र "त्रिवृद्बहिष्पवमानमि"त्युक्त्वा तृचत्रयानुक्रमणं तदैवाऽर्थवद्भवति, यदि लौकिकपदार्थपरित्यागेन स्तोत्रीयानवकवचनस्त्रिवृच्छब्दोऽत्राऽध्ययनविध्यनु-

मता भवेत् । तेन यत्राऽपि तृचत्रयानुक्रमणं नाऽस्ति "त्रिवृदग्निष्टुदग्निष्टोमः" ( तां. ब्रा. १७. ६. १. ) इत्यादौ, तत्राऽपि स्तोत्रीयानवकवचनस्त्रिवृच्छब्दो विज्ञायते । न चैतन्न सम्भवति ।

यद्यपि "ब्रह्मस्तोम" इत्यादौ समुदायवचनं स्तोमशब्दः, तथाऽपि "पञ्चदशः स्तोमो भवती"ति वेदे श्रवणात् डट्प्रत्ययान्तस्य च पञ्चदशशब्दस्य व्याकरणानुशासनेन याज्ञिकप्रसिद्धेश्च स्तोत्रीयासमुदायवचनत्वात्तत्समानाधिकरणोऽयं स्तोमशब्दः स्तोत्रीयासमुदायवचनो विज्ञायते । एवं "त्रिवृदग्निष्टुदग्निष्टोम" इत्यादौ त्रिवृत्समभिव्याहारात्स्तोत्रीयानवकार्थत्वमेवेति नाऽनुपपन्नम् ।

न च मनुवचनविरोधः, मनुवचनस्याऽपि लौकिकप्रयोगान्तर्निविष्टत्वेनाऽविरोधकत्वादिति । तदुक्तम्—

त्रिवृच्छब्दः प्रयुक्तो यः स्तोत्रीयानवकं प्रति ।
कस्तं शक्तस्ततोऽन्यत्र नेतुं जन्मशतैरपि ॥ इति ॥

( तं. वा. १. ३. ४. पृ. २२३ )

यत्र पुनर्वेदप्रसिद्धार्थपरिग्रहो न सम्भवत्येव, यथा—'त्रिवृता यूपं परिवीयाऽऽग्नेयं सवनीयं पशुमुपाकरोति" (श. ब्रा. ४. २. ४. ११.) इत्यादिषु, तत्र लोकप्रसिद्धार्थस्वीकार एव न्याय्यो न त्वन्यत्राऽपी-

ति । एवं चर्वश्ववालशब्दयोरप्युक्तन्यायेन वेदप्रसिद्धार्थस्यैवाऽपूर्वसिद्ध्युपायत्वम् , न लौकिकस्य । तथाच "आदित्यः प्रायणीयश्चरुः, "आश्ववालः प्रस्तरः" इति विधाय "अदितिमोदनेन" इति "ते वालाः काशताङ्कताः" इति चौदनकाशयोस्तुल्यवगमाद्विधिस्तुत्योश्च समानविषयत्वनियमात्तयोरेव चर्वश्ववालशब्दार्थत्वम् ।

न च गौणत्वाश्रयणेन लोकप्रसिद्धस्थालीतुरगवालस्तुतिरेवेयं "आदित्यो वै यूपः" "यजमानः प्रस्तरः" "स्वर्गो लोक आहवनीयः" इति वद्भविष्यतीति वक्तव्यम् , यतो गत्यन्तरासम्भवेन हि तत्र तथाऽऽश्रितम् । न ह्यादित्यादीनां यूपादिरूपत्वं सम्भवति । इह पुनरोदनस्य यागसाधनत्वसम्भवात् , काशस्य च प्रस्तररूपत्वसम्भवा क्यशेषात्तदर्थनिर्णय एवेति । तदुक्तम्—

अर्थवादकृताऽप्यत्र प्रतिपत्तिर्बलीयसी ।
तद्भावत्वादृते नाऽस्य तस्याऽप्यस्ति प्रयोजनम् ॥ इति ॥

( तं. वा. १. ३. ४. पृ. २२३. )

न च "सन्दिग्धेषु वाक्यशेषान्निर्णय" इत्यनेन तुल्यार्थत्वम् , यतो यत्र हि शब्दार्थसन्देहे वाक्यशेषान्निर्णीयते, तत्र तन्न्यायविषयत्वमेव । इह पुनर्लोकवेदयोस्त्रिवृदादिपदेष्वर्थद्वयस्याऽस-

न्दिग्धत्वेन लौकिकस्याऽर्थस्य वैदिकेनाऽर्थेन बाध एव न विकल्प इति व्युत्पाद्यते । अतो न तुल्यार्थत्वमिति । तदुक्तम्—

लौकिकी प्रतिपत्तिर्हि स्वार्थे निस्संशया स्थिता ।
वैदिक्यपि तथा स्वार्थे बाध्यते न विपर्ययात् ॥ इति ॥

( तं. वा. १. ३. ५. पृ. २२४. )

प्रयोजनम्—कर्मसु विकल्पेन लौकिकवैदिकार्थोपादानम्, यदि पूर्वपक्षः । सिद्धान्ते तु लौकिकार्थबाधेन वैदिकार्थोपादानमेवेति ।

सूत्रन्तु—"शास्त्रस्थैव" प्रतिपत्तिर्बलीयसी । धर्मस्याऽपूर्वात्मनः "तन्निमित्तत्वात्" शास्त्रनिमित्तत्वादिति ॥

( इति त्रिवृच्चर्वश्ववालाधिकरणम् )

इति पञ्चमं यववराहाधिकरणम् ॥

अथ षष्ठं पिकनेमाधिकरणम् ॥

## चोदितन्तु प्रतीयेताऽविरोधात्प्रमाणेन ॥

( विषयसंशयौ )

अथ यान् शब्दानार्याः कस्मिंश्चिदाचरन्ति, म्लेच्छास्तु कस्मिंश्चित्प्रयुञ्जते, यथा—पिकनेमसततामरसशब्दाः । तेषु किं निगमनिरुक्तव्याकरणवशेन धातुतोऽर्थः कल्पयितव्यः ? उत यत्र म्लेच्छा आचरन्ति स शब्दार्थः ? इति ।

( प्रभाकरमतेन पूर्वोत्तरपक्षौ )

इमं तु सन्देहं सङ्गतिलोभात्प्रभाकरो नाऽनुमन्यते । अयञ्च तस्याऽभिसन्धिः—न तावन्निगमनिरुक्तव्याकरणवशेन पिकाद्यर्थावधारणं सम्भवति, यतो मन्त्रार्थवादेषु क्वचिदर्थविशेषे प्रयुक्तानां शब्दानां निगमादिवशेनाऽवयवव्युत्पत्तिः प्रतिपाद्यते । न च पिकादिशब्दानां क्वचिदर्थविशेषे वेदे प्रयोगोऽपि दृश्यत इति न तावत्तद्वशेनाऽर्थावधारणम्, नाऽपि म्लेच्छप्रसिद्धिवशेन । तस्याः पूर्वाधिकरण एव वेदार्थावधारणं प्रत्यनङ्गत्वस्योक्तत्वात् । अतोऽनध्यवसायादप्रामाण्यमिति ।

( प्रभाकरमतदूषणम् )

तदयुक्तम्—उभयथाऽप्यध्यवसायसम्भवात् । तथा हि—निगमादिवशेनाऽपि तावदिहाऽर्थावधारणं सम्भवत्येव । न च मन्त्रार्थवादेषु क्वचिदर्थविशेषे प्रयोगे सत्येव परं निगमादिभिरर्थावधारणमिति वक्तव्यम् । अप्रसिद्धशब्दार्थावधारणेऽपि निगमादेरुपयोगदर्शनात् । तथा हि—"बर्हिर्देवसदनं दामि" इत्यत्र लवनसामानाधिकरण्येनाऽप्रयुक्तस्याऽपि दामीत्यस्य पदस्य व्याकरणवशेनैव लवनार्थत्वमवधार्यते ।

एवं (१)भक्षानुवाकेऽपि ग्रहणसामानाधिकरण्येनाऽप्रयुक्त-

---

१. ज्योतिष्टोमे हुतस्य सोमस्य शेषभक्षणं विहितम्—"अभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि सोमं भक्षयन्ति" ( तै. सं. ६. ३. ११. ) इति । ऋत्विजः अभिषुत्य सोमरसं लतातो निष्पीड्य, आहवनीयाख्येऽग्नौ हुत्वा होमं कृत्वा प्रत्यङ्मुखा गच्छन्तस्सदोनामकमण्डपमासाद्य तत्रोपविश्य समवेताः तं हुतशेषं सोमं भक्षयेयुरिति तदर्थः । तच्च भक्षणं "भक्षेहि माऽऽविश दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वायेहि वसो पुरोवसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्यां सध्यासं" ( तै. सं. ३. २. ५. ) इत्यादिमन्त्रैः कर्तव्यम् । ते च मन्त्रा यस्मिन्ननुवाके पठिताः, स भक्षानुवाक इति कथ्यते ।

स्याऽपि "साध्यासं"( तै. सं. ३. २. ५. )इति पदस्य निरुक्तावगतेनाऽवयवान्वयेन ग्रहणार्थत्वमवधार्यत इति। तथा म्लेच्छप्रसिद्धिवशेनाऽपि पिकाद्यर्थावधारणं सम्भवत्येव। न च पूर्वाधिकरणन्यायेन म्लेच्छप्रसिद्धेश्शब्दार्थावधारणं प्रत्यनङ्गत्वमिति वक्तव्यम्। यतो बलवदार्यप्रसिद्धिविरोधेन हि तत्राऽनङ्गत्वमुक्तम्। इह तु विरोधाभावान्निष्प्रतिपक्षम्लेच्छप्रसिद्धेरपि निर्णायकत्वमुचितमेवेति। अतोऽनध्यवसायादप्रामाण्याभिधानमप्रामाणिकस्यैवेति। तेन यथावार्तिकमेवाऽधिकरणं प्रस्तूयते—

( भाट्टमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः—यद्यप्यत्र पिकादिशब्देषु पीलवादिपदेष्विवाऽऽर्यप्रसिद्धिविरोधो नाऽस्ति, एवमवयवप्रसिद्धेर्विलम्बितार्थप्रतीतिहेतुत्वेन च समुदायप्रसिद्धिर्बलीयसी, तथाऽपि निगमादिशास्त्रार्थवत्त्वाद्विलम्बिन्यप्यवयवप्रसिद्धिरेव बलीयसी। न तु म्लेच्छरूपाश्रयदूषिताऽसन्मूला समुदायप्रसिद्धिः। तदुक्तम्—

सन्मूलस्य प्रमाणत्वं साध्यस्याऽपि वरं श्रितम्।
न सिद्धमप्यसन्मूलमाश्रयेणाऽभिदूषितम्॥ इति॥

( तं. वा. १. ३. ५. पृ. २२७ )

किञ्च म्लेच्छप्रसिद्धार्थपरिग्रहे सति द्रविडकर्णाटसिंहलादिदेशभेदेन म्लेच्छभाषावैचित्र्यात्सर्वेष्वेवाऽऽर्यप्रसिद्धशब्देषु कदाचित्क्वचिद्देशे केनाऽपि म्लेच्छेनाऽयं शब्दः क्वचिदर्थे प्रयुक्त इति शङ्कायां निगमादिवैयर्थ्यप्रसङ्गः। अतो निगमादिवशेनैव पिकादिशब्दानामर्थनिर्णय इत्येवं प्राप्ते—

( भाट्टमतेन सिद्धान्तः )

अभिधीयते—भवेदेवं यद्यार्यप्रसिद्ध्यविरोधेऽपि म्लेच्छप्रसिद्धिः प्रमाणं न भवेत्। तथा हि—पिकादिशब्दास्तावद्वेदेष्वनुष्ठेयार्थतया श्रूयन्ते। तेन नैतेषां पदापभ्रंशरूपत्वं संभवति। नाऽप्यनर्थकत्वम्। न चैते आर्यव्यवहारे क्वचिदर्थविशेषे प्रसिद्धाः प्रत्यभिज्ञायन्ते। ज्ञायन्ते च कोकिलाद्यर्थविषया म्लेच्छप्रयोगेषु। न च शब्दार्थसम्बन्धावधारणे कश्चिदार्यम्लेच्छयोर्विशेषोऽस्ति। यत्र पुनरार्यैरन्यत्र प्रयुक्तः शब्दो म्लेच्छैरन्यत्र प्रयुज्यते, तत्राऽऽर्याणां शब्दार्थनिरूपणेऽत्रभियुक्ततरत्वात्तद्वशेन म्लेच्छप्रसिद्धेर्गौणत्वेनैवोपपत्तेर्भवत्वार्यप्रसिद्धार्थस्य मुख्यत्वेन बलीयस्त्वम्। न चाऽत्र म्लेच्छप्रसिद्धेर्गौणत्वं सम्भवति, मुख्यभूतार्थान्तराभावात्।

न च निरुक्तादिवशेनैवाऽत्र मुख्यार्थनिरूपणमिति युक्तम्; निरुक्तवशेनाऽप्यर्थविशेषावधारणासम्भवात्। तथा हि—पिकश-

ब्दस्य तावन्निगमवशेनाऽर्थविशेषकथनं नाऽस्त्येव। तथा सति सन्देहाभावात्। किन्त्ववयवव्युत्पत्त्यनुसारेणोहनीयोऽसावर्थः। तत्र पिबति पाति पचतीत्यनेकधातुसाधारणत्वादवयवान्वयस्य निरुक्तवशेनाऽपि नाऽर्थविशेषावधारणम्। अतो निरुक्तप्रसिद्धिरपि न म्लेच्छप्रसिद्धिविरोधिनी, किन्तु कोकिलः पिबति पाति पचतीत्येवं म्लेच्छप्रसिद्ध्यनुसारेणैवेति। यत्र पुनरन्विष्यमाणाऽपि म्लेच्छप्रसिद्धिरपि नोपलभ्यते "सृण्यासमि"त्यादिपदेषु, तत्र निरुक्तादीनामेव निर्णायकत्वम्। तदुक्तम्—

यस्य चाऽन्विष्यमाणाऽपि प्रसिद्धिर्न भविष्यति।
कामं प्रदर्शितद्वारा तत्र कल्प्याऽऽश्रयिष्यते॥
विक्षिप्ता बहुरूपा च सा सन्देहप्रदायिनी।
अनन्योपायतामात्रे क्वचिदेव ग्रहीष्यते॥ इति॥

(तं. वा. १. ३. ५. पृ. २२८)

या त्वभियुक्तैरन्विष्यमाणाऽप्यनुपलब्धार्थान्तरप्रसिद्धिः, सा कदाचित् क्वचिद्देशे समस्तीति शङ्क्यमाना धूमस्याऽग्निसन्देहेऽपि साधारणीत्युपेक्षणीयैवेति। न चैवं सति प्रसिद्धार्थपदगोचरस्य निरुक्तस्य वैयर्थ्यमिति वक्तव्यम्। "षडङ्गो वेदोऽध्येतव्य" इति विधिबलात्सर्वत्रैव निगमनिरुक्तव्याकरणावबोधितपदार्थस्यैवाऽनुष्ठित-

स्य फलापूर्वसाधनत्वाभ्युपगमात् । तदुक्तम्—

न चाऽर्थप्रत्ययानङ्गं निरुक्ताद्यप्यनर्थकम् ।
षडङ्गवेदविज्ञानपूर्वकर्मक्रियाफलात् ॥

( तं. वा. १. ३. ६. पृ. २२८ )

अतो म्लेच्छप्रसिद्धानामपि पिकादिपदार्थानां ग्रहणं युक्त-मेवेति ।

प्रयोजनं-पूर्वपक्षेऽनियमः, सिद्धान्ते कोकिलस्यैवोपादनमिति ।

सूत्रन्तु—म्लेच्छप्रसिद्धमपि वेदे "चोदितं प्रतीयेत प्रमाणेन" विरोधाभावादिति ॥

इति षष्ठं पिकनेमाधिकरणम् ॥

अथ सप्तमं कल्पसूत्राधिकरणम् ॥

## प्रयोगशास्त्रमिति चेत् ॥

( विषयसंशयौ )

इह कल्पसूत्राण्युदाहरणम् । माशकं हास्तिकं कौण्डिन्यकमित्येवंलक्षणकानि किं प्रमाणमप्रमाणमिति सन्दिग्धानि ।

( प्रभाकरमतेन पूर्वपक्षः )

अत्र प्रभाकरेण सङ्गतिलोभादित्थमधिकरणमुपवर्णितम्—कल्पसूत्राणामपि वेदवत्स्वाध्यायानध्यायरूपादरविशेषादर्थाविशेषाच्च माशकादिसमाख्यानां च काठकादिवत्प्रवचनतोऽप्युपपत्तेर्वेदत्वम् । सति च वेदत्वे परस्परव्याघातोऽत्र दृश्यते । तथाहि—सर्वासु तिथिषु दर्शपूर्णमासाविति कल्पसूत्रम्, पौर्णमास्यमावास्ययोरेवेति वेदः । न चाऽत्र व्रीहियववद्विकल्पसम्भवति । असङ्कीर्णार्थयोर्हि परस्परविरोधे विकल्पो भवति । अत्र सर्वासु तिथिषु दर्शपूर्णमासाविति पौर्णमास्यमावास्ययोरपि प्राप्तत्वाद्विकल्पासम्भवेन विरुद्धार्थयोः परस्परव्याघातादप्रामाण्यमेवेति पूर्वः पक्षः ।

( प्रभाकरमतेन सिद्धान्तः )

सिद्धान्तस्तु—स्यादेवं काठकादिवत्समाख्यामात्रमत्र भवेत् ।

किन्त्वविच्छिन्नदृढतरमशकादिकर्तृस्मृतेस्तत्कर्तृकत्वमेव । वेदतुल्या-दरस्तु नान्तरीयको वेदमिश्राम्नानात् । अतः कल्पसूत्राणां पौरु-षेयत्वाद्वेदविरोधेनाऽनादरणीयत्वमेवेति ।

( प्रभाकरमतदूषणम् )

तदेतदसम्बद्धम् ; न हि सङ्कीर्णार्थयोः परस्परविरोधेनाऽप्रा-माण्यं भवति । तथा सति "एका देया"इत्यादिष्वप्यप्रामाण्यप्रस-ङ्गात् । अथ तत्र फलभूयस्त्वकल्पनया अविरोधः, तथाऽत्राऽपि फलभूयस्त्वार्थमेव पौर्णमास्यमावास्ययोः श्रवणं भविष्यतीति यथा-वार्त्तिकमेवाऽधिकरणं प्रस्तूयते--

( भाट्टमतेन सङ्गतिः )

पूर्वं मन्वादिस्मृतिमुदाहृत्य तुल्यन्यायतया कल्पसूत्राणां पुरा-णानाञ्च श्रुतिमूलतया प्रामाण्ये निरूपिते इदानीं कल्पसूत्रमुदाहृ-त्य तेषामेव स्वातन्त्र्येण वेदवत्प्रामाण्यमाशङ्क्य तन्निराकरणेन स्मृत्यधिकरणन्याय एव व्यवस्थाप्यते । न च वाच्यं "धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात्" ( जै. सू. १. ३. १. ) इत्यनु-पलभ्यमानमूलशब्दानामेवाऽष्टकादिस्मृतीनां तन्न्यायविषयत्वा-त्, कथं प्रत्यक्षोपलभ्यमानमूलानां कल्पसूत्राणामपि तन्न्याय-

विषयत्वम् । यतो न स्मृतीनामपि सर्वासामनुपलभ्यमानमूलत्वम्, उपनयनादिस्मृतीनां मूलभूतप्रत्यक्षवेदोपलम्भात् । नाऽपि कल्पसूत्राणां सर्वेषामेव प्रत्यक्षवेदमूलत्वम् । नानाशाखागताङ्गोपसंग्राहिणां तेषां मूलभूतकृत्स्नवेदोपलम्भाभावात् । स्वल्पभूयस्त्वे परं विशेषः । न चैतावता तन्न्यायविषयत्वं भवति । यत्तु प्रथमं कल्पसूत्रमात्रमेवोदाहरणमित्युक्तं, तद्भाष्यानुसारेणेति नाऽऽदरणीयम् ।

( भाट्टमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः--स्मृतीनां पुराणानां कल्पसूत्राणां च महाजनादरपरिगृहीतातीन्द्रियार्थविषयत्वादग्निहोत्रादिचोदनावद्वेदत्वमेव । तथाऽऽचार्यवचनं प्रमाणमिति वेदादेवाऽवगम्यते । तच्चैषां नित्यत्वे सत्युपपद्यते । अन्यथा नित्यानित्यसंयोगविरोधात् माशकादिसमाख्यायाश्च काठकादिसमाख्यावत्प्रवचनादेवोपपत्तेः । कर्तृव्यपदेशश्च मन्त्रकृद्व्यपदेशवदुपपत्स्यते ।

यथाहि—"शिशुर्वाङ्गिरसो मन्त्रकृतां मन्त्रकृदासीदि"ति (तां. ब्रा. १३. ३. २४ ) मन्त्रप्रवक्तरि मन्त्रकृद्व्यपदेशो वेदे, तथा प्रवक्तरि माशकादौ लोके कर्तृव्यपदेश इति । एवञ्च सति बुद्धाद्यागमानामपि वेदवदेव तुल्यन्यायतया प्रयोगशास्त्रत्वाविशेषात् धर्मे प्रामाण्यं

पूर्वपक्षिणोऽभिमतमित्येवं प्राप्ते अभिधीयते—

नाऽऽसन्नियमात् ॥

( भाट्टमतेन सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यद्यत्र महाजनादरपरिगृहीतातीन्द्रियार्थविषयत्वं वेदत्वमन्तरेणोपपद्येत । तत्तूभयथाऽप्युपपद्यते, वेदत्वेन वेदमूलत्वेन च । तत्राऽविच्छिन्नदृढतरकर्तृस्मृतेः पौरुषेयत्वेन वेदत्वासम्भवात् स्मृत्यधिकरणसिद्धान्तन्यायेन वेदमूलत्वेनैव व्यवस्थाप्यते ।

यत्तु नित्यत्वेऽपि मन्त्रकृद्व्यपदेशवत्कर्तृव्यपदेश इत्युक्तम्, तदसङ्गतम्; व्यपदेशमात्रं हि मन्त्रकृद्व्यपदेशवद्यथाकथञ्चित्समाधानमधिकुरुते । दृढतरकर्तृस्मृतिस्तु नाऽनित्यतामन्तरेण कथञ्चित्समाधातुं शक्यते । न च सा वेदे समस्ति । तथा सति वेदस्याऽप्यनित्यत्वप्रसङ्गात् । एवञ्च सति समाख्याऽपि पौरुषेयत्वनिबन्धना, न तु काठकादिवत्प्रवचननिबन्धना ।

यत्तु "आचार्यवचः प्रमाणं" इति वेद एव कल्पसूत्रादीनां नित्यत्वं प्रतिपादयति, इतरथा नित्यानित्यसंयोगविरोधादित्युक्तम्,

तदसत्; न ह्ययं वेदो मशकादीनां कल्पसूत्ररूपप्रवचनविषयः, किन्तर्ह्याचार्यवचनविषय एवाऽयम्। आचार्यश्च मन्वादिभिरुक्त एव।

उपनीय तु यश्शिष्यं वेदमध्यापयेद्द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ इति ॥

( मनु. २. १४० )

तस्य च वचनं शिष्यविषयं प्रमाणमेवेति। तदुक्तम्—

व्याचक्षाणस्य वेदार्थान् वेदांश्च वदतस्स्वयम्।
शिष्यान् प्रत्याप्तभावात्स्यादाचार्योक्तिप्रमाणता ॥ इति ॥

( तं. वा. १. ३. ६. पृ. २४२ )

नाऽपि नित्यानित्यसंयोगविरोधः। आचार्यशब्दस्य प्रवृत्तिनिमित्तोपाधिसामान्याश्रयणेन पाचकादिशब्दवन्नित्यार्थत्वात्। अथ वा आचिनोति श्रोतृबुद्धिमिति व्युत्पत्त्याऽऽचार्यो वेद एवेति नाऽनुपपन्नम्। अत एव दृढतरकर्तृस्मृतेर्बुद्धाद्यागमानामपि न स्वातन्त्र्येण प्रमाणता।

इयांस्तु विशेषः—कल्पसूत्रादीनां वेदमूलत्वेन प्रामाण्यम्, तेषान्त्वसन्मूलत्वेनाऽप्रामाण्यमेवेति।

प्रयोजनं पूर्वपक्षे—अधातकल्पसूत्रप्रस्मरणेऽपि वेदप्रस्मरण-प्रायश्चित्तम्, सिद्धान्ते त्ववेदत्वान्नेति ।

सूत्रन्तु—"न" वेदत्वं कल्पसूत्रादीनां प्रागसतामेव मशका-दिभिः "नियमात्"निबन्धनादिति ॥

इति सप्तमं कल्पसूत्राधिकरणम् ॥

अथाऽष्टमं होलाकाधिकरणम् ॥

## अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥

( विषयसंशयौ )

अनुमानात्स्मृतेराचाराणां च प्रामाण्यमिष्यते । येनैव हेतुना ते प्रमाणम्, तेनैव व्यवस्थिता एव प्रामाण्यमर्हन्ति । तस्माद्धोला-कादयः प्राच्यैरेव कर्तव्याः, आह्नीनैबुकादयो दाक्षिणात्यैरेव, उद्वृषभयज्ञादय उदीच्यैरेवेति ।

( प्रभाकरमतेन पूर्वपक्षः )

अत्र प्रभाकरेण सङ्गतिलोभादित्थमधिकरणमुपवर्णितम्—

आचारस्य प्राच्यादिनिष्ठत्वात्प्राच्यादिपदवद्वेदानुमानमेव युक्तम् । प्राच्यादिपदानां चाऽर्थविशेषानवधारणेनाऽव्यवस्थितार्थत्वात्प्राच्यादिपदवती चोदना न व्यवसितार्था, न प्रमाणमिति पूर्वः पक्षः ।

( प्रभाकरमतेन सिद्धान्तः )

सिद्धान्तस्तु—भवेदेवं यदि प्राच्यादिपदवती चोदनाऽनुमीयते, किन्तु सामान्येनैव होलाकादिकर्ममात्रविषयिणी । सा च व्यवस्थितार्थैवेति नाऽप्रामाण्यमिति ।

( प्रभाकरमतदूषणम् )

तदिदमसङ्गतम्—तत्किमव्यवस्थितार्थप्राच्यादिपदवती चोदना बुध्युपसंहारासम्भवान्मूलत्वेन कल्पयितुमेव न शक्यत इत्यप्रमाणम् ? कल्पिता वाऽप्रमाणम् ? यद्यकल्पितैव न प्रमाणम् , तदा को विरोधः ? अथ कल्पिता सती न प्रमाणमित्युच्यते, तदसम्बद्धम् ; न हि बुध्युपसंहारमन्तरेणाऽऽचारमूलतया चोदना कल्पयितुमेव शक्यते । तथा कल्पिता च न प्रमाणमिति बालजल्पितमिति यथा वार्त्तिकमेवाऽधिकरणं प्रस्तूयते—

( भाट्टमतेन पूर्वः पक्षः )

पूर्वत्र स्मृतिगतं विशेषं निरूप्येदानीमाचारगतो विशेषश्चिन्त्यते ।

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः—होलाकाद्याचारस्य प्राच्यादिसम्बन्धेनैवोपलम्भात्तद्वशेन श्रुतिरनुमीयमाना होलाकादयः प्राच्यादिभिरेव कर्तव्या इति विशेषश्रुतिरेवाऽनुमीयते । तदुक्तम्—

अन्यवेश्मस्थिताद्धूमान्न वेश्मान्तरमग्निमत् ।
प्रमीयते न चाऽदृष्टधूमैरिति हि निश्चितम् ॥

( तं. वा. १. ३. ७. पृ. २४४ )

ननु प्राच्यादिशब्दप्रवृत्तिनिमित्तस्यैवाऽव्यवस्थितत्वान्न व्यवस्थितविशेषश्रुत्यनुमानं सम्भवति । तथा हि—न तावद्ब्राह्मणत्वादिजातिवत्प्राच्यत्वादिजातिरस्ति । न च प्राच्यादिदेशजन्यत्वं व्यवस्थाकारणम् । देशान्तरगतप्राच्यपितृजनितानामपि होलाकाद्याचारदर्शनात् । नाऽपि प्राच्यादिदेशनिवासो व्यवस्थाकारणम् । अन्यदेशीयानां तद्देशनिवासिनामपि तददर्शनात् । अत एव कृष्णमृत्तिकादेशीयत्वं लोहिताक्षत्वादिकं वा न व्यवस्थाकारणम् । सर्वेषामेव व्यभिचारदर्शनात् ।

उच्यते—एकैकशस्सर्वेषां व्यभिचारेऽपि प्राच्यादिसमाख्या तावत्सकलानुष्ठातृसाधारणी समस्ति । सैव व्यवस्थाकारणं भविष्यति । तेन समाख्याया एव तावद्व्यवस्थितानुमानहेतुत्वात्समा-

ख्यायुक्तपुरुषविशेषविषयमेव प्रमाणं स्यादित्येवं प्राप्ते अभिधीयते—

अपि वा सर्वधर्मस्स्यात्तन्न्यायत्वाद्विधानस्य ॥

( भाट्टमतेन सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि प्राच्यादिसमाख्याऽत्र व्यवस्थाकारणं भवेत् । सा हि प्रवर्तमाना पाणिनीयस्मृत्यनुसारेण चतुर्धा प्रवर्तते । तथा हि तत्स्मरणम्—"सोऽस्य निवासः, तत्र भवः, तत्र जातः, तत आगत" ( पा. सू. ४. ३. ८९; ५३; २५; ७४. ) इति । तदयमर्थः—प्राचि वसति, प्राचि तिष्ठति, प्राचि जातः, प्राच आगतः प्राच्य इत्युच्यते । तदुक्तम्—

सम्बन्धैर्बहुभिर्देशसमाख्या हि प्रवर्तते ।
निवासभवजातत्वतदागमनहेतुभिः ॥ इति ॥

( तं. वा. १. ३. ७. पृ. २४४ )

न चैवंभूताऽपि समाख्या व्यवस्थाकारणम् । प्राचि दाक्षिणात्यजनितस्य प्राग्देशनिवासिनोऽपि होलाकाद्यनुष्ठानादर्शनात् । तस्यैव दाक्षिणात्यसमाख्यानिमित्ताभावेऽप्याह्नीनैबुकाद्यनुष्ठानदर्शनात् ।

अथ न व्याकरणस्मृतिनिबन्धना समाख्या निमित्तम्, किन्तूच्छृङ्खलैव लौकिकी समाख्या निमित्तमित्युच्यते, तथा सति दा-

त्विणात्यस्याऽपि साङ्केतिकप्राच्यादिनाम्नो होलाकाद्यनुष्ठानप्रसङ्गः। अतो व्यवस्थाकारणाभावात्प्राच्यादिपदयुक्तश्रुतिकल्पने गौरवप्रसङ्गाच्चाऽविशेषणैव होलाकादिकर्तव्यताप्रतिपादिका श्रुतिरनुमीयते । यत्तु केषाञ्चिदस्माकमेवैतदनुष्ठेयमिति कृत्वाऽस्याऽनुष्ठानमन्येषाञ्चाऽननुष्ठानम्, तद्भ्रान्तिनिबन्धनमेव। दृष्टश्चैतत्सामान्येन प्रत्यक्षश्रुतिस्मृतिविहितेऽपि कर्मणि केषाञ्चिदनुष्ठानमननुष्ठानं चाऽन्येषाम् । यथा साधारणविधानेऽपि दुर्गोत्सव एव वराटादौ जम्बाललीलानुष्ठानम्, वङ्गपाश्चात्यानां तु चैत्रशुक्लचतुर्दश्यामेवेति न किञ्चिदनुपपन्नमिति ।

प्रयोजनं-पूर्वपक्षे प्राच्यादिभिरेव होलाकाद्यनुष्ठेयम्, सिद्धान्ते तु सर्वैरेवेति ।

सूत्रन्तु—होलाकादिकर्म सर्वेषामेव "धर्मः" स्यात् । होलाकादिकर्म "विधानस्य" सर्वधर्मताप्रतिपादकन्यायवत्त्वादिति ।

इत्यष्टमं होलाकाधिकरणम् ॥

अथ नवमं व्याधिकरणाधिकरणम् ।।

## प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यादिति॥

( विषयसंशयौ )

गौर्गावी गोणा गोपोतलिकेत्येवमादयः शब्दा उदाहरणम् । यथा गोशब्दस्यास्यानादिमतः प्रमाणम् , तथा गाव्यादयोऽपि, उत नेति सन्देहः । किमत्रैकशब्दोऽविच्छिन्नपारम्पर्योऽर्थाभिधाने, इतरे त्वपभ्रंशाः, उत सर्वेऽनादय इति ।

( प्रभाकरमतेन पूर्वपक्षः )

अत्र प्रभाकरेण सङ्गतिलोभात् "न चोदाहरणमादरणीय"मिति भाष्यकारीयमुदाहरणमनादृत्य "अश्वमालभेत"इत्यादिचोदनागतोऽश्वशब्द उदाहृत्य विचारितः । लोकेऽश्वशब्दस्य तुरगे दरिद्रे च प्रयोगो दृश्यते । तत्र च न ज्ञायते कुत्राऽयं साधुः, कुत्र चाऽसाधुरिति । न च व्याकरणस्मृतिर्विनिगमनाकारणम् । निर्मूलत्वेन तस्याः प्रमाणत्वासम्भवात् । अतः "अश्वमालभेत"इत्यनध्यवसितार्थाश्वपदवती चोदना न प्रमाणमिति पूर्वः पक्षः ।

( प्रभाकरमतेन सिद्धान्तः )

सिद्धान्तस्तु—व्याकरणस्मृतेरनादिप्रयोगमूलत्वेन प्रमाणत्वा-

तद्वशेन तालव्यशकारयुक्तोऽयमश्वशब्दस्तुरग एव साधुः । दन्त्य-सकारयुक्तश्च 'न विद्यते स्वमस्मिन्नि'ति व्युत्पत्त्या दरिद्रे साधुः, न तालव्यशकारयुक्त इति "अश्वमालभेत" इति चोदनाऽध्यवसितार्थत्वा-त्प्रमाणमेवेति ।

( प्रभाकरमतदूषणम् )

तदिदमयुक्तम् ; पूर्वपक्षे हि व्याकरणस्मृतेर्निर्मूलत्वेनाऽप्रा-माण्ये सति प्रयोगवशादेव सर्वत्र साधुत्वं वक्तव्यम् । तच्चोभय-त्राऽप्यविशिष्टमिति तुरगे दरिद्रे चाऽयमश्वशब्दः प्रयुज्यमानः साधु-रेव । तथा च सत्यनेकार्थात्तादिशब्देष्विवाऽर्थप्रकरणाभ्यामध्य-वसायसम्भवान्नाऽनध्यवसायादप्रामाण्यमिति यथा वार्त्तिकमेवाऽधि-करणं प्रस्तूयते—

( भाट्टमतेन विषयसंशयौ )

पूर्वं स्मृत्याचारयोर्धर्मं प्रति सर्वप्रकारं प्रामाण्यं निरूप्येदानीं प्रसङ्गेन व्याकरणस्मृतेश्शब्दसाधुत्वं प्रति प्रामाण्यमस्ति नाऽस्तीति 'साधुभिर्भाषिते'ति साधुशब्दस्य धर्मं प्रत्युपयोगित्वेन निरूप्यते । अयमेवाऽत्र पारमार्थिकस्सन्देहः । भाष्यकारेण तु किं सर्वे गोगा-व्यदायः शब्दास्सास्नादिमत्पदार्थे साधवः ? उत गोशब्द एव साधु र्गाव्यादयोऽपभ्रंशाः ? इति फलभूतस्संशयो दर्शित इति मन्तव्यम् ।

( भाट्टमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः—गोगाव्यादिशब्दानां साध्वसाधुविवेके व्याकरणस्मृतिः प्रमाणं भवेत्, यदि मन्वादिस्मृतिवन्मूलभूतं प्रमाणमनुमातुं शक्येत। तत्र न तावत्प्रत्यक्षं मूलं सम्भवति, तस्य वर्णस्वरूपातिरिक्तवाचकशक्तिरूपसाधुत्वविषयत्वासम्भवात्। नाऽपि व्याकरणस्मृतिसहकृतम्, निर्मूलत्वेन व्याकरणस्मृतेस्सहकारित्वासम्भवात्। नाऽप्यनुमानम्, तत्प्रतिबद्धलिङ्गाभावात्। नाऽपि शब्दः, तस्य पौरुषेयत्वेऽन्धपरम्परादोषात्। अपौरुषेयस्य च प्रवृत्तिनिवृत्तिविषयत्वेन सिद्धविषये प्रामाण्यायोगात्। उपमानन्तु सादृश्यैकविषयत्वादनाशङ्कनीयमेव। नाऽप्यर्थापत्तिः, तस्या अप्यर्थप्रतिपत्त्यन्यथानुपपत्तिप्रभवत्वेन गाव्यादिष्वप्यविशेषात्। अतः पञ्चप्रमाणानुत्पत्त्या व्याकरणस्मृतिमूलमभावप्रमाणविषयमेवेति सिद्धम्।

किञ्च स्ववचनव्याघातादपि व्याकरणमप्रमाणं साधुत्वे। तथा हि—"जनिकर्तुः प्रकृतिः" (पा.सू. १.४.३०) इति सूत्रम्। अत्र जनिशब्देन जननमेव विवक्षितम्। तेनाऽयमर्थः—जननस्य कर्ता जायमानस्तस्य या प्रकृतिरुत्पादकस्तस्याऽपादानसंज्ञा भवति। न च जनिशब्देनेगन्तेन जननमभिधीयते, "इक्श्तिपौ धातुनिर्देश" इति स्वयमेव प्रतिषिद्धत्वात्। तथा जनिकर्तुरिति समासोऽप्यनुपपन्नः,

"तृजकाभ्यां, कर्तरि च" ( पा. सू. २.२. १५, १६ ) इति तृजन्तस्य कर्तृशब्दस्य स्वयमेव षष्ठीसमासप्रतिषेधात् । तथा अकप्रत्ययात्तस्याऽप्यनेनैव षष्ठीसामासनिषेधात् "तत्प्रयोजको हेतुश्च" ( पा. सू. १.४.५५ ) इत्यत्र सूत्रे तस्य प्रयोजक इति तच्छब्देन सहाऽकप्रत्ययान्तस्य प्रयोजकशब्दस्य षष्ठीसमासोऽप्यनुपपन्नः ।

एवमर्थविधानवधारणादपि न प्रमाणम् । तथा हि—"भूवादयो धातवः" इत्यत्र किं धातुशब्दप्रवृत्तिनिमित्तम् ? न तावद्गणपाठः, "भूसत्तायाम्" इत्यत्र सत्ताशब्दस्याऽपि धातुत्वप्रसङ्गात् । नाऽपि क्रियावचनत्वम्, भू इत्येतस्याऽप्यधातुत्वापत्तेः । अत एव न मिलितयोरपि धातुशब्दप्रवृत्तिनिमित्तत्वम्, भूसत्तायामित्यत्रैव क्रियावचनत्वाभावात् । तस्मादर्थानिश्चयादप्यप्रामाण्यम् ।

एवं कारकानुशासनमप्यसम्बद्धमेव । तथा हि—"स्वतन्त्रः कर्ते" ति कर्तृलक्षणम् । अत्र च स्वातन्त्र्यमेव न ज्ञायते । यदीच्छाप्रयत्नाधारत्वं स्वातन्त्र्यम्, तर्हि 'काष्ठानि पचन्ति, स्थाली पचति' इत्यत्राऽकर्तृत्वप्रसङ्गः । अथ धातूपात्तव्यापारत्वं कर्तृत्वम्, तर्हि पचतीत्यत्र पचिधातुना स्थालीसम्मार्जनोपक्रमस्य सिक्थपरीक्षणपर्यन्तस्य व्यापारनिचयस्योपात्तत्वात्सर्वकारकाणामपि कर्तृत्वप्रसङ्गः ।

एवं कर्मादयोऽप्यधिकरणपर्यन्तास्सर्व एव दुर्निश्चया इत्युक्तमपि वार्तिके विस्तरभयान्नोच्यते। अतो व्याकरणस्य साधुशब्द- "प्रयोगोत्पत्तावशाक्तत्वा" तदनुगतेष्वेव शब्देषु साधुत्वं नाऽवतिष्ठत इति न साधुत्वं प्रति व्याकरणस्मृतेः प्रामाण्यमित्येवं प्राप्ते अभिधीयते—

## शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ॥

( भाट्टमतेन सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि शब्दसाधुत्वे व्याकरणस्मृतिः प्रमाणं न भवेत्। न च निर्मूलत्वादप्रामाण्यम्, प्रत्यक्षस्यैव मूलत्वात्। तथाहि—साधुत्वं नाम क्वचिदर्थविशेषे स्वाभाविकप्रतिपादनशक्तियोगिनः शब्दस्य विलक्षणं रूपम्। तच्च प्रकृतिप्रत्ययादिद्वारेण व्याकरणस्मृत्या यस्य प्रतिपाद्यते, तस्यैव व्याकरणस्मृतिसहकृतेन श्रोत्रप्रत्यक्षेणाऽसाधुशब्दव्यावृत्तं साधुत्वरूपं स्फुटतरमद्यतनैस्तावत्प्रतीयत एव, ब्राह्मणत्वमिव मातापितृसम्बन्धस्मरणसहकृतेन चाक्षुषप्रत्यक्षेण। रत्नतत्वमिव रत्नपरीक्षाशास्त्रज्ञानाहितसंस्कारसहकृतेन चाक्षुषप्रत्यक्षेणैव। तेन पाणिनेरपि पूर्वतरव्याकरणस्मरणाहितसंस्कारसहितश्रोत्रप्रत्यक्षेणैव साधुत्वोपलम्भान्न निर्मू-

लत्वं व्याकरणस्मृतेरिति । नाऽप्यन्धपरम्परा, स्मृतिप्रत्यक्षयोः पौर्वापर्यानादित्वात् । तदुक्तम्—

यथा च पद्मरागादीन् काचस्फटिकमिश्रितान् ।
परीक्षका विजानन्ति साधुत्वमपरे तथा ॥ इति ॥

(तं. वा. १. ३. ८. पृ. २८२)

अतः स्मृत्यन्तराहितसंस्कारसहकृतप्रत्यक्षमूलत्वाद्व्याकरण-स्मृतेः प्रामाण्यमेवेति । नाऽपि "जनिकर्तुः प्रकृतिः" इत्यादिषु स्ववचनव्याघातादप्रामाण्यम् । दृष्टा हि सर्वत्रैव सूत्रकाराणां सूत्रेषु गौणलाक्षणिका एव प्रयोगाः । यथा हि जैमिनेरेव नित्ये वाच्ये औत्पत्तिकशब्दप्रयोगः, तथा जनिशब्दोऽपि धात्वर्थे, जन्मनि लाक्ष-णिकत्वान्न दोषमावहति । तथा "तृजकाभ्यां कर्तरि च" इति नि-षिद्धषष्ठीसमासाश्रयणमपि निषेधस्य वैकल्पिकत्वप्रदर्शनार्थमेव ।

यच्च "भूवादयो धातवः" (पा. सू. १. ३. १) इत्यत्र धातुशब्दार्था-परिज्ञानादप्रामाण्यमुक्तम्, तदयुक्तम्; तिङादिप्रत्ययप्रकृतित्वमेव हि धातुत्वम् । एतदेव "प्रत्ययः, परश्च" (पा. सू. ३. १. १, २.) इति सूत्राभ्यां पाणिनिना स्वयमेव दर्शितम् ।

यदपि "स्वतन्त्रः कर्ता" इति कर्तृलक्षणं स्वातन्त्र्यानिरूपणाद-

युक्तमित्युक्तम्, तदयुक्तम्; क्रियासिध्यनुकूलेतरकारकप्रयोक्तृत्वं हि स्वातन्त्र्यम्। तच्च क्वचिदप्रयुक्तस्य, क्वचिदन्यप्रयुक्तस्य। तदुक्तं भर्तृहरिणा—

प्रवृत्तौ वा निवृत्तौ वा कारकाणां य ईश्वरः।
अप्रयुक्तः प्रयुक्तो वा स कर्ता नाम कारकम्॥ इति॥

यस्तु 'काष्ठानि पचन्ती'त्यादिष्वचेतनेषु कर्तृनिर्देशः, स वैवक्षिक एवेति मन्तव्यम्। एवं कर्मादिष्वपीप्सिततमत्वाद्यूहनीयम्। अतः श्रोत्रप्रत्यक्षमूलत्वेन शब्दसाधुत्वेन व्याकरणस्मृतिः प्रमाणमेवेति गवादिशब्दा एव साधव इति। गाव्यादिशब्दानां पुनरुच्चारणासामर्थ्यतो मूलशब्दापभ्रंशानां विवक्षितेषु मूलशब्दानुसारेणाऽर्थप्रतिपादकत्वम्, अविवक्षितेषु तु वाचकभ्रान्त्यैवेति।

प्रयोजनम्—क्रतौ वरणभरणसङ्कल्पादिवाक्येष्वपभ्रंशेनाऽपि व्यवहर्तव्यम्, यदि पूर्वः पक्षः। सिद्धान्ते तु—'साधुभिर्भाषेत' इति साधुशब्देनैवेति।

सूत्रन्तु—"शब्दे" अभिव्यज्यमाने तदभिव्यक्तेः प्रयत्नाधीननिष्पत्तिकत्वात् "अपराधभागित्वं" अपभ्रष्टत्वमभिव्यञ्जकदोषादेवेति भावः।

इति नवमं व्याकरणाधिकरणम्॥

अथ दशमं लोकवेदाधिकरणम् ॥

## प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥

( विषयसंशयौ )

अथ गौरित्येवमादयश्शब्दाः किमाकृतेः प्रमाणम् ? उत व्यक्तेः ? इति सन्देहे उच्यते । इदं तावत्परीक्ष्यताम्—कि य एव लौकिकाश्शब्दास्त एव वैदिकाः ? उत अन्ये ? इति । यदा त एव, तदा किं त एवैषामर्थाः ? उत अन्ये ? इति संशयः ।

( प्रभाकरमतम् )

अत्र प्रभाकरेण य एव लौकिकास्त एव वैदिका उताऽन्य इत्यस्याऽपि विचारस्याऽऽकृत्यधिकरणोपोद्घाततामभ्युपगत्याऽपि साक्षात्सङ्गतिलोभादप्रामाण्येन पूर्वपक्षमुक्त्वा पृथक् सङ्गतिर्दर्शिता ।

( प्रभाकरमतदूषणम् )

सा चेयमतिदानरसिकतया जामातृसहायस्याऽपि यौतुकदानमिव भाति । यतो न ह्युपोद्घातस्याऽपि पृथक् सङ्गत्यपेक्षा भवति । प्रकृतविचारसिद्ध्यर्थतया तत्सङ्गत्यैव तस्य सङ्गतत्वादिति यथा वार्त्तिकमेवाऽधिकरणं प्रस्तूयते —

( भाट्टमतेन सङ्गतिः )

पूर्वाधिकरणे हि गवादिशब्दनां वाचकत्वे निरूपिते तत्प्रसङ्गेन वाच्यनिरूपणमारभ्यते—किमेषामाकृतिर्वाच्या ? उत व्यक्तिः ? इति। अस्य च विचारस्य निष्प्रयोजनत्वमाशङ्क्य तत्प्रयोजनवत्त्वायेद-मुपोद्घातेन विचार्यते—किं य एव लौकिकाः शब्दास्त एव वैदि-काः,त एवैषामर्थाः ? उत अन्ये ? इति ।

( भाट्टमतेन पूर्वपक्षः )

तत्राऽयं पूर्वपक्षिणोऽभिसन्धिः—"अथ शब्दानुशासनं" इत्यु-क्त्वा केषां शब्दानां "लौकिकानां वैदिकानां च" इत्यभियुक्तानामेव शब्दविदां व्यपदेशभेददर्शनाद्भेदस्तावदवगम्यते ।

तथा रूपभेदादपि भेदः। तथा हि—वेदे "अष्टाकपालः" इति पठन्ति। लोके च "अष्टकपाल"इति । तथा वेदे "अग्निष्टोमः" इति, लोके च "अग्निस्तोमः" इति । एवं वेदे "गृभ्णामि" इति, लोके "गृह्णामि" इति ।

तथाऽर्थभेदोऽपि दृश्यते । वेदे श्रूयते--"उत्ताना वै देवगवा वहन्ति" इति । तथा "सुवर्णपर्णो वनस्पतिः" । एवं "घृतं मधु" इति। न च गवादिशब्दानामेवंभूतोऽर्थो लोके समस्ति । तेन यत्राऽपि गवादिशब्देषु रूपभेदो नाऽवगम्यते, तत्राऽप्यर्थभेदादेव शब्दभेदः

सादृश्यनिबन्धनश्चैकत्वाध्यवसाय इति । यत्राऽपि रूपभेदस्तत्राऽपि तद्भेदादेवाऽर्थभेदोऽपि । अर्थप्रतिपत्तिस्तु वेदे लौकिकशब्दसादृश्यादेवेति । अतो लोके वेदे च शब्दार्थयोर्भिन्नत्वाल्लौकिकगवादिशब्दानामाकृतिव्यक्तिवाचित्वनिरूपणं वेदप्रामाण्यानुपयोगित्वेनाऽयुक्तमेवेत्येवं प्राप्ते—

( भाट्टमतेन सिद्धान्तः )

अभिधीयते—भवेदेवं यदि लौकिकवैदिकशब्दयोर्भेदो भवेत् । तौ तु प्रत्यभिज्ञानाल्लोकवेदयोरप्येकावेव । य एव गवादिशब्दा लोके प्रतीयन्ते, त एव वेदेऽपि प्रत्यभिज्ञायन्ते । न चाऽष्टाकपालाग्निष्टोमगृभ्णामीत्यादिशब्दाः किञ्चिद्विकारान्न प्रत्यभिज्ञायन्त इति वाच्यम् । यतश्छिन्नलाङ्गूलभग्नविषाणगोव्यक्तिवत्प्रत्यभिज्ञायमानत्वात् । अन्यथा लौकिकाविकृताष्टकपालादिशब्दानां वैदिकाष्टाकपालादिशब्देष्विवाऽविकृतार्थावगमाभावप्रसङ्गात् । भवतु वा केषाञ्चिदन्यत्वम्, न चैवमविकृतप्रत्यभिज्ञायमानानां गवादिशब्दानामप्यन्यत्वे किञ्चित्कारणमस्ति ।

व्यपदेशभेदस्तु—ब्राह्मणपरिव्राजकवद्भिन्नरूपवैदिकवाक्यान्तर्गतिनिबन्धन एव । यत्तु "उत्ताना वै देवगवा वहन्ति" इति तदप्यर्थवादमात्रं, लोकसिद्धस्य गोपदार्थस्योत्तानवहनरूपक्रियाविशेष-

प्रतिपादनस्य प्रशंसार्थत्वात् । एवमुदाहरणान्तरमपि स्तुत्यर्थमेवेति । तदुक्तं भाष्ये—"य एव लौकिकाश्शब्दास्त एव वैदिकास्त एव चैषामर्थाः"( शा. भा. १. ३. १०. ) इति ।

प्रयोजनम्—पूर्वपक्षसिद्धान्तयोराकृत्यधिकरणानारम्भारम्भाविति ।

सूत्रन्तु—लोकवेदयोश्शब्दरूपस्याऽर्थरूपस्य चैकत्वं प्रत्यभिज्ञारूपप्रत्ययाविभागात् । एवञ्च सति दर्शपूर्णमासादिप्रयोगचोदनानां भावस्स्यादिति ॥

इति दशमं लोकवेदाधिकरणम् ॥

अथैकादशमाकृत्यधिकरणम् ॥

( विषयसंशयौ )

यदा च लौकिका एव शब्दास्तदर्थाश्च, तदा सन्देहः—किमाकृतिः शब्दार्थः ? अथ व्यक्तिः ? इति । का पुनराकृतिः ? का व्यक्तिः ? द्रव्यगुणकर्मणां सामान्यमाकृतिः, असाधारणविशेषा व्यक्तिरिति ।

( प्रभाकरमतेन पूर्वपक्षः )

अत्र प्रभाकरेण सङ्गतिलाभादित्थमधिकरणमुपवर्णितम्—उच्चरिते हि गोशब्दादावुभयं प्रतीयते—जातिश्च व्यक्तिश्च। कार्यान्वयित्वं च द्वयोरप्यविशिष्टम्। यथा हि "गवा यजेते"त्यत्र व्यक्तेः कार्यान्वयः, तथा "श्येनचितं चिन्वीत" ( तै. सं. ५. ४. ११. ) इत्यत्राऽऽकृतेरपि, व्यक्तिसादृश्यस्याऽशक्यसम्पादनत्वात्। न चोभयोरपि शब्दवाच्यत्वम्, अन्यतरस्याऽपि शब्दवाच्यत्वे नान्तरीयकतयाऽन्यतरावगमोपपत्तेः। अथ च कस्य शब्दवाच्यत्वं, कस्य नान्तरीयकत्वमित्यवधारयितुं न शक्यत इति गवादिपदवती चोदनाऽनध्यवसितार्थत्वादप्रमाणमेवेति पूर्वः पक्षः।

( प्रभाकरमतेन सिद्धान्तः )

सिद्धान्तस्तु—आनन्त्यव्यभिचाराभ्यां सम्बन्धग्रहणाशक्तेर्व्यक्त्यभिधानासम्भवादाकृतेरेव वाच्यत्वम्, नान्तरीयकत्वेनैकसंविद्वेद्यतयाऽवगमो व्यक्तेरिति।

( प्रभाकरमतदूषणम् )

तदेतत्पूर्वापरप्रतिसन्धानशून्यस्यैवाऽभिधानम्। जातिव्यक्त्योरन्यतरवाच्यत्वानवधारणेऽप्यवगत्यविशेषादनुष्ठानाविशेषाच्च कुतोऽनध्यवसायादप्रामाण्यम्? तथा सति किं नित्यत्वेन श्रोत्रदेशस्थस्यैव

ध्वन्यभिव्यक्तस्य शब्दस्याऽर्थप्रतिपादकत्वं, अनित्यत्वेन वा वीची-तरङ्गवृत्त्या श्रोत्रदेशसमागतस्येत्यनध्यवसायादप्रमाण्यप्रसङ्गः।

तथा जातिव्यक्त्योरेकसंविद्वेद्यत्वे जातिरेवाऽभिधेयेति सिद्धान्तोऽप्यनुपपन्नः। यतोऽभिधानक्रियाजनितज्ञानविषयत्वं खलु वाच्यत्वम्। तत्राऽऽकृतेरभ्युपगम्य तस्मिन्नेव ज्ञाने व्यक्तिः प्रतिभासमाना नाऽभिधीयत इति चित्रम्।

अथोच्येत—द्वयी हि शब्दशक्तिरसाधारणी साधारणी च। तत्राऽसाधारणी शक्तिरभिधानरूपा जातिगोचरैव। साधारणी तु प्रत्यक्षानुमानार्थापत्तीनामिव व्यक्तिगोचराऽनभिधानरूपा, तदुभय-शक्तिजनितैकज्ञानविषयत्वेऽपि जातिव्यक्त्योरसाधारणशक्तिविषय-त्वाज्जातिरेव वाच्या न व्यक्तिरिति।

तदेतद्वादमात्रम्—न हि प्रमाणानां प्रात्यात्मिकीमसाधारण-शक्तिं विना प्रतिपाद्यविषयिणी काचिच्छक्तिरस्ति। तथा हि—प्रत्यक्षस्य सम्बद्धवर्तमानविषयिणी, अनुमानस्य ज्ञातसम्बन्धव्या-पकविषयिणी, शब्दस्य वाच्यविषयिणी, अर्थापत्तेस्त्वनुपपद्यमानो-पपादकविषयिणी। प्रतिपादकसाधारण्येऽपि यदि व्यक्तेरसाधा-रणशक्तिविषयत्वादवाच्यत्वम्, तदा जातेरप्यवाच्यत्वप्रसङ्गः।

अथ मतम्—वृद्धव्यवहारे वाच्यवाचकसम्बन्धावधारणकाले

जातिव्यक्त्योरेकशब्दसाहचर्यावगमादभिधानकाले व्यक्तिसंस्कारस्याऽप्युद्बुद्धत्वात्संस्कारशब्दाभ्यां समाहारजमुभयविषयमेकं ज्ञानं जन्यते प्रत्यभिज्ञानमिवेति ।

तदेतच्छङ्खशुक्तिगतशुचित्वदर्शनान्नरशिरःकपालादावपि प्राण्यङ्गत्वेन शुचित्वानुमानमिवाऽऽभाति । यतः, प्रत्यक्षज्ञानस्यैवाऽयं महिमा यदुद्बुद्धसंस्कारेन्द्रियाभ्यां जन्यमानमिन्द्रियासम्बद्धमपि प्रत्यभिज्ञादौ विषयीकरोति, न त्वनुमानादिज्ञानानामपि । तानि खलु न्यायसम्पादनाधीनप्रवृत्तीनि । तत्राऽनुमानज्ञानं तावद्व्याप्तिपक्षधर्मतापरामर्शवशाल्लिङ्गवशेनोपजायमानं हंसक्षीरोदकन्यायेन व्यापकविशेषविषयमेवोपजायते । अर्थापत्तिज्ञानमप्यनुपपत्तिपरामर्शादुपजायमानमुपपादकैकविषयमेवोत्पद्यते ।

एवं शब्दोऽप्यभिधानसमये पूर्वावगतसामर्थ्यपरामर्शवशेनाऽर्थमभिदधानो यद्गोचरैवाऽस्य वाचकशक्तिरवधारिता, तद्विषयमेव ज्ञानं जनयति । प्रत्यक्षज्ञानं तु न न्यायसम्पादनापरिशोधितविषयम् , किन्त्वर्थेन्द्रियसन्निकर्षवशादुपजायमानं समसमयभाविस्मृतिहेतुसंस्कारोद्बोधवशादिन्द्रियासम्बद्धमपि विषयीकुरुते । यथा–तत्तेदन्तार्थविषयं प्रत्यभिज्ञानं, संज्ञिविषयश्च सविकल्पकज्ञानम् । इतरथा त्वत्पक्षे सम्बन्धस्मरणहेतुसंस्कारोपस्थितत्वाद्व्यक्तेरिव सम्ब-

न्धस्याऽपि शब्दोपजनितज्ञानविषयत्वापत्तिः। न केवलं सम्बन्धस्य, किन्तु व्युत्पत्तिस्थानवृद्धव्यवहारक्रियायाः क्रियावाचकशब्दस्याऽपि।

अथ व्युत्पत्तिकाले तयोर्व्यभिचारात्संस्कारादनुपस्थितिरित्युच्यते, एवन्तर्हि व्यक्तीनामपि व्यभिचारादनुपस्थितिः स्यात्। अथ व्यक्तिविशेषाणां व्यभिचारेऽपि व्यञ्जकत्वसामान्यरूपेण व्यक्तिमात्रस्याऽव्यभिचारादुपस्थितिः। एवं तर्हि क्रियाविशेषाणां तद्वाचकविशेषाणां च व्यभिचारेऽपि क्रियामात्रस्य तद्वाचकमात्रस्य चाऽव्यभिचारादुपस्थितेरेकसंवित्वेद्यत्वमविशिष्टमेव प्रसज्यत इति यत्किञ्चिदेतदिति यथावार्त्तिकमेवाऽधिकरणं प्रस्तूयते।

सङ्गतिस्तावदस्य प्रसङ्गेनोक्तैव। उपोद्घातायातं च लोके वेदे च शब्दार्थयोरैक्यं निरूप्य किमाकृतिश्शब्दार्थो व्यक्तिर्वेति प्रस्तुतं निरूप्यते।

( भाट्टमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः—व्यवहारार्थं हि शब्दोच्चारणम्। न चाऽऽकृत्या वेदलोकयोः कश्चिद्व्यवहारो दृश्यते। न हि वेदे "व्रीहीनवहन्ती"त्यत्राऽऽकृतिरवहन्यते। न च "पशुमालभेत"इत्यत्राऽऽकृतिरालभ्यते। न च लोके 'गां दोग्धी'त्यत्राऽऽकृतिर्दुह्यते। न च 'ब्राह्मणाय सुवर्णं दीयत' इत्यत्राऽऽकृतिर्दीयते। एवं व्यव-

हारानुसारात्प्रतीतिरपि व्यक्तिगोचरैव । तथा व्युत्पत्तिरपि वृद्धव्यवहारे व्यक्तिविषयैवेति । तेन सर्वथा व्यक्तिरेव शब्दाभिधेयेति ।

ननु च सम्बन्धग्रहणाधीनं शब्दस्याऽर्थाभिधानम् । न चोत्पन्नोत्पद्यमानोत्पत्स्यमानव्यक्तिष्वानन्त्यव्यभिचाराभ्यां सम्बन्धग्रहणं सम्भवति । अतः कथं व्यक्तिर्वाच्येति । न च पाचकादिशब्दवदानन्त्येऽपि व्यक्तीनामाकृतिमेवोपलक्षणीकृत्य सम्बन्धग्रहस्सुकरो भविष्यतीति वाच्यम् । यतस्सभागे पाचकादौ प्रकृतिभागोपनीतपचिक्रियायाः कर्त्ता प्रत्ययेनाऽभिधीयत इति युक्तम् । गौरित्यत्र तु गोशब्दस्य निर्भागस्य नैवं सम्भवति, विभक्तेरपि प्रातिपदिकार्थानतिरिक्तार्थत्वात् ।

उच्यते—भवेदेवं यदि सर्वत्र शब्दाभिहितस्यैवोपाधित्वं भवेत्, न चैवम् ; वत्सादिशब्देष्वदर्शनात् । यथा हि वत्सशब्दो गोत्वमनभिधायैव गोत्वोपलक्षितं वयोविशेषमभिदधाति, यथा वा किशोरशब्दोऽश्वत्वमनभिधायैवाऽश्वत्वोपलक्षितमेव वयोविशेषमभिधत्ते, यथा वा आचार्यशब्द उपनयनाध्यापनादिकमनभिधायैव तदुपलक्षितं ब्राह्मणव्यक्तिमभिधत्ते, तथा गवादिशब्दा अप्यनभिधेयामेवाऽऽकृतिमुपलक्षणीकृत्य व्यक्तिमभिधास्यन्तीति सर्वत्र व्यक्तिवाचित्वमेवेत्येवं प्राप्ते अभिधीयते—

# आकृतिस्तु क्रियार्थत्वात् ॥

( भाट्टमतेन सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यद्यनवगतायामाकृतौ गवादिशब्देभ्यो व्यक्त्यवगमः प्रकारान्तरेणोपपद्येत । न ह्यनन्तासु व्यक्तिष्वेकस्योपलक्षणस्याऽनवगमे व्यक्त्यवगमस्सम्भवति । तदत्रोभयावगमस्याऽवश्यं स्वीकारे किमाकृतिमात्रं शब्देनाऽभिधीयते, तद्द्वारेणाऽनन्ता व्यक्तयः प्रतीयन्ताम् ? आकृतिमेव वा प्रकारान्तरोपस्थितामुपलक्षणीकृत्याऽनन्ता व्यक्तयश्शब्देनाऽभिधीयन्ताम् ? इति चिन्तायामनन्तव्यक्त्यभिधाने शब्दस्याऽनन्तशक्तिस्वीकारप्रसङ्गदोषादाकृतिरेवाऽभिधीयत इति न्याय्यम् ।

किञ्चाऽऽकृतेश्शब्दानभिधाने प्रकारान्तरेणोपस्थितिरपि तस्या दुर्लभैव । यतो व्युत्पत्तिकालावगतसाहचर्यवशेन सहचरितशब्ददर्शनात् सहचरितस्मृतिर्वक्तव्या । न चाऽसौ नियतरूपा । सहचरितोपाध्यायदर्शनेऽपि शिष्यस्मरणादर्शनात् । व्युत्पन्नस्य तु शब्दश्रवणादाकृतिव्यक्त्यवगमस्य नियतत्वात् । न च शब्दार्थावगमकाले सम्बन्धस्मृतेरवश्यंभावित्वादाकृत्यवच्छिन्नायां च व्यक्तौ सम्बन्धग्रहादाकृतिस्मृतिरवश्यम्भाविनीति वक्तव्यम् , यतोऽनभ्यासदशा-

यां सम्बन्धस्मृत्यपेक्षा, अभ्यासदशायान्तु स्वशक्त्यैव शब्दस्याऽर्थाभिधानमिति स्थितम् । तदुक्तं कारिकायाम्—

अनभ्यस्ते त्वपेक्षन्ते शब्दसम्बन्धिनस्स्मृतिम् ।
अत्र प्रयुक्त इत्येवं बुध्यन्ते हि चिरात्क्वचित् ॥ इति ॥

( श्लो. वा. १. १. ५. पृ. ४१५. चौ. सं. )

वत्सकिशोराचार्यशब्दादौ तु संस्काराद्दिद्वारेणाऽभ्युपलक्षणोपस्थितावनेकव्यक्त्यभिधानमप्यगत्या स्वीकरणीयम् । न हि तत्र गवाद्याकृतावभिहितायामपि तथाभूतव्यक्त्यवगम आक्षेपतः सिध्यति । अथ वोभयमपि तत्राऽभिधेयमेव स्त्रीकर्त्तव्यम् । यदि वा शाण्न्यायेन वत्सत्वादिगोत्वाद्यन्यतरसामान्यमेवाऽभ्युपेतव्यम् । यत्र तु गवादिशब्देष्वाकृत्यभिधानमेव गत्यन्तरमस्ति, तत्र न किञ्चिदनुपपन्नमिति ।

नन्वेवं भवत्वाकृत्यभिधानं, व्यक्त्यवगतिस्तु कुतः ? लक्षणयेति केचित् । तदयुक्तम्; सम्बन्धानुपपत्त्या हि लक्षणा भवति । अनुपपत्तिश्च क्रियाकारकसम्बन्धयोग्यपदार्थावगमनिबन्धना । न चाऽऽकृतिः क्रियाकारकसम्बन्धयोग्या । किं तर्हि ? व्यक्तिरेव । सर्वपदानाञ्चाऽऽकृतिमात्राभिधाने क्रियाकारकसम्बन्धयोग्यपदार्थानवगतेः कस्य कुत्र सम्बन्धानुपपत्त्या लक्षणेति । तेन क्रियापदस्य

लक्षणया व्यक्तिपरत्वे कारकपदे व्यक्तिलक्षणा । कारकपदस्य च लक्षणया व्यक्तिपरत्वे क्रियापदे व्यक्तिलक्षणेत्यन्योन्याश्रयप्रसङ्गः ।

तेनैतदेवाऽत्र वक्तव्यम्—पूर्वपक्षन्यायेनैव सर्वेषां गवादिपदानां वृद्धव्यवहारतो व्युत्पत्तेर्व्यवहारस्य च सर्वत्र व्यक्तिनिष्ठत्वात् व्यक्त्यर्थतयैव व्युत्पत्तिः, किन्तु तद्व्यक्त्यर्थत्वमानन्त्यव्यभिचारभिया साक्षाद्व्यक्त्यभिधाने न सम्भवतीति यथा तत्सम्भवति तदङ्गीकरणीयम् । अत्र च गत्यन्तरासम्भवात्तत्प्रतीत्यर्थमेव तदात्मभूताकृत्यभिधानमङ्गीकृतम् । तेनाऽऽकृत्यभिधानस्यैव व्यक्तिपर्यन्तत्वादेक एवाऽयमुभयार्थाभिधानलक्षणः शब्दव्यापारः । यथा हि पाचकस्योद्दिष्टौदनस्य कारकयोजनाकर्तृत्वमेवौदनकर्तृत्वं, यथा चोद्दिष्टस्वर्गस्य यागकर्तृत्वमेव स्वर्गकर्तृत्वम् । न ह्योदने स्वर्गे वा पुरुषस्य कृतिरन्याऽस्ति, येन तत्राऽप्यस्याऽन्यकर्तृत्वं भवेत् । तथा व्यक्तिप्रतिपादनोद्देशेन प्रयुक्तस्य शब्दस्याऽऽकृत्यभिधानमेव व्यक्त्यभिधानम् ।

इयांस्तु विशेषः—आकृतेस्साक्षादेवाऽभिधानविषयत्वम् , व्यक्तेस्त्वभिधानोद्देशादभिधानविषयत्वम् , ओदनस्वर्गयोरिव कृतिविषयत्वम् । अतो व्यक्तिरपि शब्दस्याऽभिधाव्यापारप्रतिपाद्यैव,

न तु व्यापारान्तरप्रतिपाद्येति तत्त्वम् । तदुक्तं भाष्यकारेण— "पदानि हि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि" इति । अभिधा-व्यापारेण प्रतिपाद्येत्यर्थः । अनेनैवाऽभिप्रायेण वार्त्तिककारपादै-रप्युक्तम्—

"अभिधेयाविनाभूते प्रवृत्तिर्लक्षणोच्यते" ॥ इति

( तं. वा. १. ४. १२. पृ. ३५४ )

अत एवाऽभिहितान्वयप्रयासोऽपि वाक्यार्थे विहितो व्यक्त्य-न्वयाभिप्रायेणैव । न त्वाकृत्यभिप्रायेण, वाक्यार्थे तस्या अनन्व-यात् । एवंभूतमेव व्यवहितमभिधानमाक्षेप इत्युच्यते । यस्तु तत्र तत्र लक्षणेत्युक्तम्, तत्किञ्चिद् व्यवधानाभिप्रायेणेति मन्तव्यम् । न चैवं गोत्वशब्देऽप्याकृत्यभिधानस्य व्यक्तिपरत्वात्प्रतीतिवैलक्षण्या-भावप्रसङ्ग इति वाच्यम् । यतः "तस्य भावस्त्वतलौ" ( पा. सू. ५. १. ११९. ) इत्यनुशिष्टेन त्वतल्प्रत्ययेन व्यक्तिव्यतिरिक्तनि-ष्कृष्टाकृतिमात्राभिधानात् व्युत्पत्तिकाले च व्यक्त्यर्थत्वानवगमाद् व्य-क्तितात्पर्याभावेन प्रतीतिवैलक्षण्योपपत्तिरिति न किञ्चिदनुपपन्नम् ।

प्रयोजनं पूर्वपक्षे—सामान्योपलक्षितव्यक्तीनां शब्दार्थत्वे सामान्यस्य च शब्दानभिधेयत्वेन संस्कारोपस्थितेरनियतत्वाद्यदा

संस्काराद्नुपस्थितिस्तदाऽननुष्ठानम् । सिद्धान्ते तु सामान्यस्याऽभिधेयत्वान्नियमेन तदवगतावनुष्ठानमिति ।

सूत्रन्तु—"आकृतिरेव" गवादिशब्दाभिधेया "क्रियार्थत्वात्" "कङ्कचितं चिन्वीत" इत्यादिषु सामान्यद्वारेण तस्या एव क्रियान्वयित्वादित्यर्थः । व्यक्तिसादृश्यस्याऽशङ्कासम्पादनत्वेनोपदेशानर्हत्वादिति ॥

यो नाम कश्चिदिह संविदितं प्रमेयं
ग्रन्थान्तरे लिखति वा वदति स्वयं वा ।
मत्कर्तृतामननुकीर्त्य स कीर्तिलोपात्
निस्सन्ततिर्जगति जन्मशतानि भूयात् ॥

इत्येकादशमाकृत्यधिकरणम् ॥

प्रथमाध्यायस्य तृतीयः पादः ॥






* श्रीः *

## अथ प्रथमाध्यायस्य चतुर्थः पादः ॥

### तत्र प्रथमं नामधेयप्रामाण्याधिकरणम् ॥

# उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात् ॥

( विषयसंशयौ )

"उद्भिदा यजेत" ( तां ब्रा. १९. ७. २, ३. ) "बलभिदा यजेत" ( तां. ब्रा. १९. ७. ३. ) "विश्वजिता यजेत" ( तां. ब्रा. १९. ४. ९. ) इति समाम्नायते । तत्र सन्देहः किमुद्भिदादयो गुणविधयः ? आहोस्वित्कर्मनामधेयानि ? इति ।

( प्रभाकरमतेन पूर्वपक्षः )

अत्र प्रभाकरेण सङ्गतिलोभादेवमधिकरणमुपवर्णितम् । "उद्भिदा यजेत" इत्यादिषु न तावन्मत्वर्थलक्षणया विशिष्टविधानं, गौरवप्रसङ्गात्, लक्षणादोषाच्च । नाऽपि पृथगेवोभयविधानं, वाक्यभेदापत्तेः । तत्राऽन्यतरविधाने यदि यागो विधीयते, तदोपपदवैयर्थ्यम् । नाऽप्यन्यत्र विहितं यागमनूद्य वेदे गुणविधिः सम्भवति, सर्वत्रैवोपपदश्रवणेन कर्मविधानासम्भवात् । तेनाऽकामेनाऽपि लौकिक एव गणयागे गुणविधिरिति वक्तव्यम् । तथा च सति प्रमाणान्तरसापेक्षत्वेन वेदस्याऽप्रामाण्यमिति पूर्वः पक्षः ।

( प्रभाकरमतेन सिद्धान्तः )

सिद्धान्तस्तु—सामानाधिकरण्यबलाद्यथाभाष्यं नामधेयत्वमिति ।

( प्रभाकरमतदूषणम् )

तदयुक्तम् ; एकार्थविधिमपेक्ष्याऽनेकार्थविधिगौरवं दोषमावहति, एवं मुख्यार्थमपेक्ष्य लाक्षणिकत्वम् , न त्वप्रामाण्यमपेक्ष्य । तदेतद्विधिगौरवमत्वर्थलक्षणाभिया वेदाप्रामाण्याश्रयणं, भोजनाधाऽभयेन मरणापत्त्याश्रयणमिवाऽऽभाति । न च लौकिकगणयागाश्रयणेऽपि लक्षणातो विमोकः, वेदविहितदेवताया अभावेन गणयागस्य मुख्ययागत्वाभावात् । भवतु वा यथा कथञ्चिल्लौकिककर्माश्रयो गुणविधिः, तथाऽपि नाऽप्रामाण्यम् । "आयुष्यं प्राङ्मुखो भुङ्क्ते" इतिवल्लौकिककर्माश्रयणेऽपि प्रामाण्योपपत्तेरिति यत्किञ्चिदेतदिति यथावार्त्तिकमेवाधिकरणं प्रस्तूयते ।

( वार्तिककारमतेन सङ्गतिः )

प्रथमपादे हि कृत्स्नस्यैव वेदस्य सकलेतरशङ्कानिरासेन धर्मं प्रति चोदनात्वेन प्रामाण्यं व्युत्पादितम् । तस्य चाऽर्थवादमन्त्रात्मकस्य चोदनानन्तर्गतत्वेन धर्मं प्रत्युपयोगाभावादप्रामाण्यमाशंक्य द्वितीयपादे चोदनान्तर्गतिप्रदर्शनेन प्रत्येकमुपयोगप्रतिपादनात्

प्रामाण्यं व्यवस्थापितम्। तृतीयपादे तु स्मृत्याचारमूलभूतस्तथाभूत एव वेदोऽस्तीति निरूपितम्।

इदानीं विध्युद्देशगतत्वेन नामधेयानां सामान्यतो निरूपितेऽपि धर्मं प्रत्युपयोगे उपयोगविशेषः पूर्वं न प्रतिपादित इति तदर्थं पुनः प्रस्तावना। अत्र यद्यपि भाष्ये पूर्वोत्तरसूत्राभ्यामेकमेवेदमधिकरणं प्रतिभाति, तथाऽपि पूर्वसूत्रस्य पूर्वपक्षाभिमतार्थप्रतिभानाद्विचारद्वयोपयोगाच्च वार्त्तिककारपादैरनुमितपूर्वपक्षं विचारद्वयमेवैतदाचरितम्।

( भाट्टमतेन पूर्वपक्षः )

तत्र प्रथमे पूर्वपक्षिणोऽयमभिसन्धिः। विध्युद्देशगतत्वेऽप्युद्भिदादिपदानां साध्यसाधनेतिकर्त्तव्यतानुपनायकत्वान्न तावद्विध्यन्तर्भावः। विधेयस्तुत्यभावाच्च नाऽर्थवादत्वम्। विहितस्मारकत्वानुपलब्धेश्च न मन्त्रत्वम्। अतस्त्रिविधवेदबहिर्भावेनाऽक्रियार्थत्वादानर्थक्यमेवोद्भिदादिपदानामिति। तदुक्तम्—

त्र्यंशवेदप्रमाणत्वादुद्भिदादि ततोऽधिकम्।
धर्मायाऽनुपयुक्तार्थमानर्थक्यं प्रपद्यते ॥ इति ॥

( तं. वा. १. ४. १. पृ. ३२१.

एवं प्राप्तेऽभिधीयते—

( भाट्टमतेन सिद्धान्तः )

भवेदेवं यद्येषां साधनांशनिवेशेन क्रियार्थत्वं न भवेत् । तथा ह्यध्ययनविधिपरिगृहीतत्वाद्वेदत्वं तावदुद्भिदादिपदानां व्यवस्थितम् । वेदस्य च क्रियार्थत्वं "आम्नायस्य क्रियार्थत्वात्" (जै.सू. १.२.१.) इत्यत्रोक्तम् । तच्च क्रियार्थत्वं यद्यप्युक्तप्रकारेणाऽर्थवादत्वेन मन्त्रत्वेन च न सम्भवति, तथाऽपि विध्युद्देशान्तर्गतत्वाद्विध्यन्तर्भाव एवाऽस्य प्रतीयते । स च यद्यप्यपुरुषार्थतया साध्यत्वेन न सम्भवति, अक्रियारूपत्वेन च नेतिकर्त्तव्यतात्वेन, तथाऽपि पारिशेष्यात्साधनांशनिवेशित्वादेवाऽस्य क्रियार्थत्वं ( नाऽर्थवत्त्वमिति(?) ) ।

तदुक्तम्—

सर्वस्य त्रिविभागत्वाद्वेदस्योक्तेन हेतुना ।
उद्भिदाद्यप्रमाणत्वमतिरेकान्न सिध्यति ॥ इति ॥

( तं. वा. १. ४. १. पृ. ३२१. )

सूत्रन्तु—"उक्तं समाम्नायैदमर्थ्यं" समाम्नायो वेदस्तस्यैदमर्थ्यं क्रियार्थत्वमुक्तम् । "तस्मात्सर्वं"उद्भिदादि "तदर्थं स्यात्" क्रियार्थं स्यादित्यर्थः ॥

इति प्रथमं नामधेयप्रामाण्याधिकरणम् ॥

## अथ द्वितीयमुद्भिदधिकरणम् ॥

अत्र चैकस्यैवाऽधिकरणस्य उभयविचारात्मकत्वान्न पृथगायोजनमिति विध्युद्देशान्तर्गतत्वेन साधनांशनिवेशे सतीदमिदानीं विचार्यते—किं गुणविधित्वेनाऽस्य साधनांशनिवेशः ? अथवा नामधेयत्वेन ? इति ।

### ( भाट्टमतेन पूर्वपक्षः )

तत्राऽयं पूर्वपक्षिणोऽभिसन्धिः । प्रसिद्धेरर्थवत्त्वात्प्रवृत्तिविशेषकरत्वाच्च गुणविधित्वमेवाऽस्य युक्तम् । तथा हि—यद्यपि लोके समुदायप्रसिद्धिर्नाऽस्ति, तथाऽपि 'उद्धर्वं भिनत्ती'ति व्युत्पत्त्या खनित्रादिद्रव्यमुद्भिदादिपदात्प्रतीयत एव । तथा सति चोद्भित्पदस्याऽर्थवत्त्वं भवति, यजिपदार्थातिरिक्तार्थप्रतिपादनात् । एवं भिन्नार्थत्वात्पुरुषप्रवृत्तावपि विशेषो भवति । तदुक्तम्—

प्रसिद्धेर्बलवत्त्वेन प्रयोजनवशेन च ।
अधिकत्वात्प्रवृत्तेश्च गुणरूपं विधीयते ॥ इति ॥

( तं. वा. १. ४. १. पृ. ३२१. )

नामधेयत्वे त्ववगताऽप्यवयवप्रसिद्धिर्हातव्या । तथा यजिपदार्थानतिरिक्तार्थत्वादानर्थक्यम् । अनतिरिक्तार्थत्वादेव प्रवृत्तावपि न विशेषकरत्वम् ।

ननु गुणो विधीयमानः फले विधातव्यः, कर्मणि वा । तत्र न तावद्गोदोहनवत्फले, प्रणयनवत् प्रकृताश्रयाभावात् । नाऽपि कर्मणि, प्रकृतकर्माभावादेव । न च दूरस्थज्योतिष्टोमानुवादेनैवाऽयं गुणविधिः, दूरस्थहोमानुवादेनाऽऽहवनीयविधिवदिति वक्तव्यम् । उत्पत्तिशिष्टगुणावरोधेन निराकांक्षे कर्मणि गुणान्तरविधानासम्भवात् । आहवनीयविधाने त्ववरोधविरोधाभावादुपपन्नो विधिरिति । न च निष्कृष्टयागानुवादादाकांक्षाप्रवृत्तेर्गुणविधानोपपत्तिरिति वक्तव्यम् । यतोऽनुवादानां पूर्वावगतार्थविषयत्वात्तदनुसन्धाने च गुणान्तरावरोधादाकांक्षाविरहस्य तदवस्थत्वात् । एतच्च चित्राधिकरण एवाऽनन्तरं प्रतिपादनीयमिति ।

किञ्च ज्योतिष्टोमेऽपि "सोमेन यजेत" इति सोमरूपगुणश्रवणादुद्भित्तुल्यत्वमेव । अतः कथं तदनुवादेनाऽपि गुणविधानम् । न चैवं सति गुणविशिष्टकर्मविधिरेवाऽयमस्त्विति वक्तव्यम्, विधिगौरवदोषात् , उद्भिद्वतेति मत्वर्थलक्षणाप्रसङ्गाच्च । तदुक्तम्—

गुणो विधीयमानोऽपि फले कर्मणि वा भवेत् ।
विशिष्टविधिबुध्या वा सर्वथा न च युज्यते ॥ इति ॥

( तं. वा. १. ४. १. पृ. ३२३ )

उच्यते—विशिष्टविधिरेवाऽयम् । न चैवं विधिगौरवं मत्वर्थ-

लक्षणा च दोषमावहति, सकलविशिष्टविध्युच्छेदप्रसङ्गात् । अथाऽगत्या तत्र तथाऽऽश्रयणम्, तदत्राऽपि समानम् । तेन यथा "दशापवित्रेण ग्रहं संमार्ष्टि" त्यादिष्वगत्याऽपि विशिष्टविधानं, तथेहाप्युद्भेदनसमर्थखनित्रादिविशिष्टकर्मविधानमेवेति ।

एवं प्राप्तेऽभिधीयते—

## अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात् ॥

( भाट्टमतेन सिद्धान्तः )

अयमभिप्रायः—भवेदेवमगत्या मत्वर्थलक्षणया विशिष्टविधिगौरवाश्रयणं, यदि नामधेयत्वेन न गतिर्भवेत् । तथा हि—"उद्भिदा" इति करणवाचितृतीयान्तपदस्य करणीभूतयागसमभिव्याहृतस्य तत्सामानाधिकरण्यं प्रतीयते । तत्प्रतीतमपि हीयेत, यदि व्रीहिसोमादिवदुद्भित्पदमर्थान्तरे निरूढं भवेत् । अवयवप्रसिद्धिस्तु 'ऊर्ध्वं भिनत्ती'ति व्युत्पत्त्या यथा खनित्रादिद्रव्ये, तथा पशूनामुद्भेदनमनेन क्रियत इति यागेऽपि तेन यजिसामानाधिकरण्यादुद्भिदादिपदानां यागनामधेयत्वमेव । तदुक्तम्—

पदमज्ञातसन्दिग्धं प्रसिद्धैरपृथक्श्रुति ।
निर्णीयते निरूढन्तु न स्वार्थादपनीयते ॥ इति ॥

अतोऽवयवप्रसिद्धेर्यागेऽपि समानत्वादप्रसिद्धार्थत्वं यदुक्तं, त-

त्तावत्परिहृतम् । यदपि यजिपदार्थानतिरिक्तार्थत्वादानर्थक्यमुक्तं, तदप्ययुक्तम्; यजिविशेषप्रतीतिहेतुत्वेनैव नामधेयस्याऽर्थवत्त्वात् । अत एवाऽप्रवृत्तिविशेषकरत्वमपि प्रत्युक्तम्, विधित्सितयागविशेषप्रतिपादनेनैव प्रवृत्तिविशेषकरत्वादिति ।

नन्वर्थविशेषप्रतिपादनेन हि पदान्तरस्य पदान्तरविशेषकत्वं भवति । यथा 'नीलमुत्पलं शुक्लः पटः' इति । न च नामधेयस्य यजिपदार्थातिरिक्तमर्थान्तरमस्ति । अतः कथमस्य यागविशेषप्रतिपत्तिहेतुत्वम् । न च स्वात्मनैव नामधेयं यजिविशेषणमिति वक्तव्यम्, तस्य शब्दानभिधेयत्वात् । शाब्दाशाब्दयोश्चाऽन्वयासम्भवात् ।

अथ नामधेयं शाब्दत्वसिद्ध्यर्थमात्मानं लक्षयतीत्युच्यते । तदपि पङ्कभिया पलायमानस्य नूनमशुचिपतनसमानम् । मत्वर्थलक्षणाभयेन हि गुणविधिपक्षमुपेक्ष्य नामधेयत्वमभ्युपगतम् । सा चेयं नामधेयत्वेऽपि स्वीकृता, किमपराद्धं गुणविधिना । किञ्च गुणविधौ मत्वर्थलक्षणायामप्यौत्सर्गिकमत्वर्थपरत्वं न परिहीणम्, इह त्वात्मलक्षणायां ततोऽपि जघन्यत्वमिति गुणविधित्वमेव ज्यायः ।

उच्यते—स्यादेवं यदि संज्ञा नीलादिपदमिव विशेषणीभूतस्वप्रतिपादितार्थोपश्लेषद्वारेणैव संज्ञिनं विशिनष्टीति ब्रूमः । किन्तु यः खलु शब्दः सामान्यवाचिशब्दसमभिव्याहृतः तद्विशेष-

मभिदधाति, सा संज्ञेत्युच्यते । यथा 'देवदत्तो ब्राह्मण' इति । स च विशेषो विशेषणस्य कस्य चित्संज्ञापदादनुपस्थितत्वादेतच्छब्दवाच्यत्वेन संज्ञान्तरविषयव्यावृत्त्या उपलक्षितो विद्यमानविशेषणयोग्यः स्वमहिम्नैव संज्ञाशब्देनाऽभिधीयते । तेनैवंभूत एवाऽयं यागविशेषः प्रतीयते, न तु विशेषणविशिष्टः । ततस्तथाभूतस्य विद्यमानविशेषणान्वयात्तत्तद्विशेषणविशिष्टरूपसिद्धिः । अतो न किञ्चिदनुपपन्नमिति ।

अत्र यद्यप्युत्पत्तिवाक्यानां साध्यभूतधात्वर्थपरत्वेन न गुणविधौ मत्वर्थलक्षणादोषो, नाऽपि नामधेयताहेतुस्सामानाधिकरण्यम्, तथाऽप्यधिकारवाक्यैकवाक्यतादशायामुद्भिदा यागेन स्वर्गमित्यन्वयसम्भवादवश्यं मत्वर्थलक्षणादोष इत्यनेनैवाऽभिप्रायेण भाष्यकारेणाऽत्र सकलोत्पत्तिवाक्यगतिप्रदर्शनार्थं फलपदं नोपन्यस्तमिति ।

प्रयोजनम्–खनित्रादिद्रव्येणैव यागो यदि पूर्वः पक्षः। सिद्धान्ते तु–"अव्यक्तासु तु सोमस्य"(जै.सू.८.१.१६.)इत्यादिषु सोमद्रव्येणैव।

सूत्रन्तु—"उत्पत्तौ" प्रथमज्ञाने "यदपूर्वं" न सोमादिपदवत्क्वचिदर्थे प्रसिद्धमुद्भिदादि तत् "नामधेयं स्यात्" । अन्यत्राऽप्रसिद्धत्वेन कस्यचिद्गुणस्य "अविधायकत्वात्" इति ।

इति द्वितीयमुद्भिदधिकरणम् ॥

अथ तृतीयं चित्राधिकरणम् ॥

## यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः ॥

( विशयसंशयौ )

"चित्रया यजेत पशुकामः" ( तै. सं. २. ४. ६. ) "त्रिवृद्बहिष्पवमानम्" ( ता. ब्रा. १०.१. १. ) "पञ्चदशान्याजानि" "सप्तदशानि पृष्ठानि" इत्युदाहरणम् । किं चित्राशब्दः, बहिष्पवमानशब्दः, आज्यशब्दः, पृष्ठशब्दश्च गुणविधयः ? उत कर्मनामधेयानि ? इति संशयः ।

( प्रभाकरमतं तद्दूषणञ्च )

अत्र प्रभाकरेणोद्भिदधिकरण एव सर्वेषां कर्मसामानाधिकरण्येनैव नामधेयत्वे सिद्धे तत्तदुदाहरणेषु विशेषाशङ्का वाजपेयपर्यन्ताधिकरणचतुष्टये निराक्रियत इति चतुर्णामधिकरणानामुद्भिदधिकरणशेषत्वात्तदीयसङ्गतिप्रदर्शनेनैव प्रमाणलक्षणे सर्वेषां सङ्गतिरुपवर्णिता । तेनोद्भिदधिकरणसङ्गतिदूषणमेव सर्वत्रोहनीयमिति यथावार्त्तिकमेवाऽधिकरणं प्रस्तूयते ।

( भाट्टमतेन सङ्गतिः )

उद्भिदादिपदानां यौगिकानां क्वचिदर्थविशेषे प्रसिद्धिरहितानां

नामधेयत्वं निरूप्येदानीं व्रीह्यादिपदवन्निरूढार्थानां चित्रादिपदानां नामधेयत्वं निरूप्यते ।

( भाट्टमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः—भवतूद्भिदादिपदानां क्वचिदर्थविशेषे निरूढत्वासंभवेन यजिसामानाधिकरण्याद्यागनामधेयत्वम् । चित्रापदस्य तु चित्ररूपार्थविशेषे, तथाऽऽज्यादिपदानां घृतादिरूपार्थविशेषे निरूढत्वाद्व्रीहिसोमवद्यागनामत्वासम्भवाद्गुणविधित्वमेव युक्तम् । एतच्च पूर्वाधिकरण एवोक्तम्—

पदमज्ञातसन्दिग्धं प्रसिद्धैरपृथक्श्रुति ।
निर्णीयते निरूढन्तु न स्वार्थादपनीयत ॥ इति ॥

( तं. वा. १. ४. १. पृ. ३६५ )

तथा च सति प्रसिद्धार्थत्वमधिकार्थत्वं प्रवृत्तिविशेषकरत्वञ्चाऽनुरुद्धं भवतीति । ननु कुत्राऽयं गुणो विधीयते । न तावत्फले, आश्रयाभावात् । नाऽपि "दधि मधु पयो घृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यं भवति" ( मै. सं. १. ३. ६.) इत्येतद्वाक्यविहिता प्राजापत्येष्टिः सन्निहिता समस्ति । तामेवाऽऽश्रयमासाद्य पशुरूपे फलेगुणविधानमिति वक्तव्यम् । तस्या अफलत्वेनाऽऽश्रयत्वायोग्य-

त्वात् । अथ तस्यामेव प्राजापत्येष्टौ गुणविधिरयमित्युच्यते । नैवम्; तस्या उत्पत्तिशिष्टदध्याद्यवरुद्धत्वेन गुणान्तरप्रवेशासम्भवात् ।

अत्रोच्यते—नाऽयं चित्राशब्दो द्रव्यपरः, किन्तु चित्ररूपवर्णपर एवाऽयम् । न चाऽत्र वर्णान्तरं श्रुतमस्ति । अतो दध्यादिभिरेव विहितचित्रवर्णैर्यजेतेति वाक्यार्थः ।

एतदप्ययुक्तम्; पशुकामपदस्य विध्यनुवादासम्भवेनाऽऽनर्थक्यात् । किञ्च चित्रयेत्यनेन स्त्रीप्रत्ययान्तेन पदेन स्त्रीत्वसमानाधिकरणं चित्रत्वं प्रतिपाद्यते, न तु चित्रत्वमात्रम् । तच्च प्राणिद्रव्य एव परं संभवति, न दध्यादौ । तेन प्रकृतप्राजापत्ययागेऽपि न गुणविधिः । अत एव दधिमधुघृतवाक्योत्पन्नं यागमनूद्य चित्रापदेन यथासिद्धान्तं फले विधानमित्येतदपि न संभवति, स्त्रीप्रत्ययान्तेन चित्रापदेनाऽप्राणिरूपस्य यागस्याऽनुवादासम्भवादिति । नाऽपि चित्रद्रव्यविशिष्टं यागान्तरमेव फले विधीयते । अव्यवस्थितचित्रगुणकद्रव्योपप्लवे प्रकृतिविशेषानिर्द्धारणेन विध्यन्तानुपस्थितेर्देवताया अभावेन यागत्वाभावात् । किञ्च गुणस्याऽप्रदेयस्य न तावद्यागसाधनत्वं, द्रव्यलक्षणायान्तु लक्षणैव तावद्दोषः, पुनर्मत्वर्थलक्षणा, विशेषणविधिकल्पना, उत्पत्तिविधिकल्पनाऽपि, चि-

ऽऽपदाच्च नानाजातीयद्रव्योपप्लवेनाऽध्यवसायश्चेति न विशिष्टविधिः ।

उच्यते—पशुयागस्य प्राणिद्रव्यकत्वात् "प्रकृतौ वा द्विरुक्तत्वात्" ( जै. सू. ३. ६. २. ) इति न्यायेन सकलपशुयागप्रकृतिभूतेऽग्नीषोमीयपशुयागे चित्रत्वस्त्रीत्वविधिरयमिति ब्रूमः ।

नन्वग्नीषोमीयपशुरुत्पत्तिशिष्टकृष्णसारङ्गलोहितसारङ्गादिवर्णान्तरावरुद्धः पुंस्त्वावरुद्धश्च । तेन तत्र कथं वर्णान्तरं लिङ्गान्तरञ्च विधातुं शक्येत । तथा प्राप्ते कर्मणि कथमनेकार्थविधानमुत्प्रेक्षापदमप्युपयाति । न चाऽत्र गत्यन्तरासम्भवोऽपि, यतोऽस्त्यग्नीषोमीयविकृतिभूता सारस्वती मेषी । न च तस्या वर्णान्तरं विरोधकमस्ति, लिङ्गान्तरं वा । न च तत्राऽनेकार्थविधानदोषोऽपि, चित्रत्वमात्रविधानात् । तेन यथाऽनारभ्याधीतमपि साप्तदश्यं दर्शपूर्णमासाख्यप्रकृतौ पाञ्चदश्यावरोधेन प्रवेशमलभमानं मित्रविन्दाध्वरकल्पासु विकृतिषु निविशते, तथेहाऽपि चित्रत्वमात्रविधानात्तत्सारस्वतमेषीगोचरमेव भविष्यतीति ।

मैवम्; "चित्रये" त्यत्र चित्रत्वस्त्रीत्वविशिष्टं करणत्वं तावत्तृतीयाविभक्त्याऽभिहितं प्रतीयते । यथा "पशुने"त्यत्र एकत्वपशुत्वविशिष्टम् । तत्र मेषीगतं यथा स्त्रीत्वविशिष्टं करणत्वमनुवाद्यं, तथा किं चित्रत्वविशिष्टमनुवाद्यं विधेयं वा । न तावदनुवाद्यम् , मेषी-

गतत्वेन चित्रत्वस्याऽप्राप्तत्वात्। नाऽपि विधेयम्, सकृदुच्चरितायाः विभक्तेरनुवाद्यविधेयार्थप्रतिपादनासम्भवात्। न चैकस्मिन्नेव प्रातिपदिके कारकत्वं स्त्रीत्वेन सम्बध्येत, न चित्रत्वेनेति शंक्यम्। न च गत्यन्तरं नाऽस्ति, अग्नीषोमीयगतत्वेनैवोपपत्तेः। तेन भङ्गाभिधानमनुपदकारस्यासङ्गतमेवेति।

न चोत्पत्तिशिष्टलोहितसारङ्गकृष्णसारङ्गादिगुणविरोधेन चित्रत्वाविधानं, लोहितसारङ्गकृष्णसारङ्गयोश्चित्रत्वाविरोधात्। तेन यथा "वायव्यं श्वेतमालभेत भूतिकामः" ( मै. सं. २. २. २. ) "सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम" ( तै. सं. २. ३. २. ) इत्यत्राऽतिदेशलप्स्यमानयोरेवालम्भननिर्वापयोरनुवादः, तथैतद्वाक्यविधास्यमानचित्रत्वान्तर्गतलोहितकृष्णवर्णादेरयमनुवादः। नाऽपि पुंस्त्वावरुद्धे कथं स्त्रीत्वविधानमिति वक्तव्यम्। "पशुना यजेत" इत्यत्र नित्यपुंल्लिङ्गस्य पशुशब्दस्य पुंपशुस्त्रीपशुसाधारणत्वेन एतद्वाक्यगतस्त्रीत्वविधानाविरोधात्, निष्कृष्टानुवादेन वा वासःप्रभृतीनामिव एकहायन्यवरुद्धेऽपि क्रये विधानाविरोधात्।

न च प्राप्ते कर्मण्यनेकगुणविधानं दोषः, चित्रत्वस्त्रीत्वविशिष्टकरणरूपैककारकविधानात्। पशुकामपदमपि पशुसाधनके कर्मणि पशूपादाने अर्थप्राप्तकामनानुवादेनोपपन्नमित्यग्नीषोमीय-

गत एवाऽयं गुणविधिः । तदुक्तम्—

चित्रत्वस्त्रीत्वयोगो हि प्राणिजातौ स्वभावतः ।
तेनैते प्राणियागाङ्गं प्रकृतिं दैक्षमाश्रिते ॥ इति ॥

( तं. वा. १. ४. २. पृ. ३२८.

तथा "पञ्चदशान्याज्यानि" इत्यत्राऽऽज्यशब्दस्तावद्घृते निरूढो न च स्तोत्रसमानाधिकरणं श्रूयते । तेनाऽस्य न स्तोत्रनामधेयत्वं, किन्तु "पञ्चदशान्याज्यानी" त्यत्र पञ्चदशसंख्याविशिष्टाज्यविधानादत्रापि प्राप्ते स्तोत्रे नोभयविधिदोषः ।

अथ वा यत्राऽन्यत्क्रियापदं न श्रूयते, तत्र "अस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोऽपि" इति कात्यायनस्मरणात्पञ्चदशसंख्याविशिष्टानां घृतानां सत्ता प्रतीयते । सा च स्तुतिसन्निधिप्रतीता स्तुतिप्रयोगवचनोन्नेयविधिना विधीयते । तथाभूतायाश्च प्रकरणेन ग्रहणात् भवति सत्ताविशेषणत्वेन ससंख्यस्यैवाऽऽज्यस्य साधनत्वेन विधिः। तेन साधनत्वावगतस्यैकाऽऽज्यस्य "आज्यैः स्तुवत" इत्यत्राऽनुवादः, स्तुतिमात्रं विधीयत इति । न चाऽऽज्यस्य स्तुतिसाधनत्वं न संभवति, "अग्निमुपनिधाय स्तुवत" इतिवत्पात्रभेदोपकल्पितपञ्चदशसंख्याकानामाज्यानामुपनिधानेनैव स्तुतिहेतुत्वोपपत्तेः ।

ननु पञ्चदशाद्यर्थे "स्तोमे डविधिः" (का.वा. ४२०, चौ.सं.)

इत्यनुशासनात्स्तोमशब्दार्थस्तुतिसमुदायावगमात्कथं डमत्ययान्तस्य "पञ्चदशानि" इति पदस्य घृतसंख्यावाचित्वम् । मैवम्; स्तुतिसाधनसमूहवचनो हि स्तोमशब्दो न स्तोत्रीयासमूहवचनः । स च स्तुतिसाधनत्वाविशेषादृग्विव घृतेऽप्यविशिष्टः । तेनाऽत्राऽपि गुणविधानमेवेति ।

एवमेव "त्रिवृद्बहिष्पवमानं" इत्यत्र लोकप्रसिद्धं त्रिवृदौषधं द्रव्यं बहिःस्थितं चलद्रूपं बहिष्पवमानशब्दाभिधेयं "बहिष्पवमानैः स्तुवत" इति विहितस्तुतिप्रयोगवचनोन्नेयविधिना विधीयते ।

तथा "सप्तदशानि पृष्ठानि"इत्यत्राऽपि लोकप्रसिद्धपृष्ठाख्यानि प्राण्यङ्गान्येव सप्तदशसंख्याविशिष्टानि "पृष्ठैः स्तुवत" इत्येतद्विहितस्तुतिप्रयोगवचनोन्नेयविधिना विधीयन्त इति सर्वत्र गुणविधिरेवेत्येवं प्राप्तेऽभिधीते —

( भाट्टमतेन सिद्धान्तः )

भवेदेवं यदि प्राप्ते कर्मणि चित्रत्वं स्त्रीत्वञ्चाऽनावृत्तेन विधिना विधातुं शक्यते । न च चित्रत्वस्त्रीत्वविशिष्टैककरणत्वविधानादनावृत्तिरिति वक्तव्यम् । यतः करणत्वस्याऽपि प्राप्तत्वेनाऽविधेयत्वात् । अथ प्राप्तत्वेऽपि तस्य चित्रत्वस्त्रीत्वावच्छेदेनाऽप्राप्तत्वाद्विधानमित्युच्यते । एवन्तर्हि "दध्ना जुहोति" "पयसा जुहोति" इत्य-

त्राऽपि द्रव्यावच्छिन्नस्य पयोवच्छिन्नस्य च होमविशेषस्याऽप्राप्तत्वेन विधानप्रसङ्गः। न च चित्रत्वस्त्रीत्वविशिष्टं करणान्तरमेव विधीयते, उत्पत्तिशिष्टकरणान्तरावरोधेन तस्य विधातुमशक्यत्वात्। प्राप्ते तु करणत्वे चित्रत्वस्त्रीत्वविधाने विध्यावृत्तिर्दुर्वारैवेति।

तदुक्तम्—

अर्थादनेकमप्यर्थं विधापयति भावना।
विशेषणविधिस्त्वन्यन्न गृह्णाति विशेषणम्॥

( तं. वा. १. ४. २. पृ. ३३० )

अनेकविधिशक्तिकल्पनागौरवं च सुव्यक्तमेवेति। तथा उत्पत्तिशिष्टपुंस्त्वावरोधेनाऽपि नाऽग्नीषोमीये स्त्रीत्वविधानं सम्भवति। न च नित्यपुल्लिङ्गत्वेन साधारणत्वात्पशुशब्दस्य स्त्रीत्वविधानाविरोध इति वक्तव्यम्। शाखान्तरे "अजोऽग्नीषोमीय" इत्याम्नातेन साधारणस्याऽपि पशुशब्दस्य पुल्लिङ्गच्छागपरत्वात्। न च शाखान्तरविधेर्गुणविधायकत्वात्स्त्रीत्वपुंस्त्वयोर्विकल्प इति पूर्वपक्ष्यभिप्रायो वाच्यः। शाखान्तरेऽपि "अजोऽग्नीषोमीय" इत्यस्य द्रव्यदेवतासम्बन्धाविशेषेणोत्पादकत्वात्। सर्वशाखाप्रत्ययमेकं कर्मेत्युत्पत्तिशिष्टपुंस्त्वावरोधेन स्त्रीत्वानवकाशात्।

न च वर्णान्तरावरुद्धेऽपि निष्कृष्टानुवादेन गुणान्तरविधिः

शक्यत इति वक्तव्यम् । निष्कृष्टानुवादस्यैवाऽशक्यत्वात् । तदुक्तम्-

प्रथमं हि स्ववाक्यस्थैर्गुणैः सम्बध्यते क्रिया ।
वाक्यान्तरगतैः पश्चान्न शुद्धा सा ह्यवाप्यत ॥ इति ॥

( तं. वा. १. ४. २. पृ. ३३० )

वासःप्रभृतीनान्तु गुणान्तरावरुद्धेऽपि क्रये आनतिलक्षणद्वारभेदादाकांक्षासम्भवाद्विधानमुपपद्यत एव । अत एव तत्र न विकल्पः, किन्तु समुच्चय एवेति ।

तथा पशुकामपदोपात्तफलसम्बन्धनिमित्तोऽप्यपरो वाक्यभेदः । यद्यपि फलं न विधीयते, तथाऽपि तत्र कर्मविधानात्कर्मणि च गुणविधानात्सम्बन्धद्वयविधानस्य वाक्यावृत्तिमन्तरेणाऽसम्भवाद्वाक्यभेद एव । न च पशुसाधनके कर्मण्यर्थप्राप्तपशुकामनानुवादोऽयमिति वक्तव्यम् । यतः पशुकामपदात्काम्यमानत्वेन प्रधानीभूतफलसम्बन्धितया कामना च गम्यते । अग्नीषोमीये तु पशुकामनायास्ताद्रूप्याभावान्नाऽनुवादकत्वमित्यतो गुणविध्यभावाद्विचित्रनानाद्रव्यकप्रकृतप्राजापत्येष्टिनामधेयमेव चित्रापदम् । एवं सति चित्रापदेन प्रकृतं कर्मोपस्थाप्य पशुरूपे फले विधीयत इति । "चित्रये"ति स्त्रीलिङ्गनिर्देशश्चेष्ट्यभिप्रायेणैवेति न किञ्चिदनुपपन्नम् ।

तथा "पञ्चदशान्याज्यानी"त्यत्राऽपि प्राप्ते स्तोत्रे न गुणद्वय-

विधानमुपपद्यते, वाक्यभेदप्रसङ्गात् । नाऽपि पञ्चदशसंख्याविशिष्टान्याज्यानि विधीयन्त इति वाच्यम् । यतः क्रिया विधीयते तद्विशेषणं वा । न चाऽऽज्यपदवाच्यं घृतं क्रिया, नापि तद्विशेषणम् । अतो न विशिष्टद्रव्यविधिः ।

अथ यत्राऽन्यत्क्रियापदं न श्रूयते, तत्र "अस्तिर्भवन्तीपरः प्रथमपुरुषे अप्रयुज्यमानोऽपी"त्येतद्बलादध्याहृतैवाऽस्तिक्रिया समस्ति । सैवोभयविशिष्टा स्तुतिप्रयोगवचनोन्नेयविधिना विधीयत इत्युच्यते । तदप्यसत् ; सर्वत्र पुरुषव्यापारो हि विधीयते, अस्तिशब्दवाच्यायास्तु सत्ताया वस्त्वात्मलाभमात्रत्वेनाऽविधिविषयत्वात् । "अग्निमुपनिधाय स्तुवीते"त्युपनिधानस्य पुरुषव्यापाररूपत्वेन भवतु विधानम् । न चाऽत्राऽपि पात्रभेदोपकल्पितपञ्चदशसंख्याकान्याज्यान्युपनिधायेति कल्पनीयम्, कल्पनागौरवदोषादेव । वाक्यस्य चाऽन्यथाऽप्युपपत्तेः । तेनोद्भिदधिकरणन्यायेन "आज्यैः स्तुवत" इति नामत्वे सिद्धे "पञ्चदशान्याज्यानी"त्यनेनाऽऽज्यनामकस्तोत्रानुवादेन संख्यामात्रं विधीयत इति । एवं सति "स्तोमेऽविधिः पञ्चदशाद्यर्थ" इत्यनुशासनमप्यर्थवद्भविष्यतीति । प्रवृत्तिनिमित्तञ्चार्थवादावगतमेतस्मिन् स्तोत्रे क्रियमाणे देवानामाजिगमनम् । अर्थवादश्च "यदाजिमीयुस्तदाज्यानामाज्यत्वम्" ( तां. ब्रा. ७. २. १. ) इति । एवं प्राप्ते स्तोत्रे "त्रिवृद्बहिष्पवमानमि"त्यत्र

त्रिवृद्द्रव्यं बहिःपवमानरूपगुणद्वयविधाने ।

तथा "सप्तदशानि पृष्ठानि" इत्यत्र सप्तदशसंख्याकपृष्ठद्रव्यविधाने वाक्यभेदप्रसङ्गान्न गुणविधित्वम् । अन्यतरविशिष्टान्यतरविधानञ्चोभयविशिष्टाध्याहृतक्रियाविधानञ्चाऽऽज्योदाहरणदूषणेनैव निरस्तमित्यत्राऽपि नामधेयत्वमेव । तथा च सति "बहिष्पवमानैः स्तुवत" इत्येतद्वाक्यविहितबहिष्पवमाननामकस्तोत्रानुवादेन ऋगाश्रितानव ख्या स्तोत्राङ्गत्वेन विधीयते । प्रवृत्तिनिमित्तञ्च बहिष्पवमानपदयुक्तमन्त्रनिर्विर्त्तनीयत्वमेव स्तोत्रस्येति ।

तथा "सप्तदशानि पृष्ठानि" इत्यत्राऽपि "पृष्ठैः स्तुवत" इत्येतद्वाक्यविहितपृष्ठनामकस्तोत्रानुवादेन सप्तदशसंख्यामात्रं विधीयत इति । नामप्रवृत्तिनिमित्तञ्च—अपां वायुना पृष्ठे स्पृष्टे रथन्तरादीनि सामानि जातानि । तस्मात्तत्साधनकानि स्तोत्राणि पृष्ठानि । तथा चाऽर्थवादेऽपि "उ स वायुः पृष्ठे व्यवर्त्तत" ( तां. ब्रा. ७. ८. १. ) इति ।

प्रयोजनम्—तत्र तत्र तत्तद्गुणोपादानं पूर्वपक्षे, सिद्धान्ते तु नामधेयत्वपक्षे नेति।

सूत्रन्तु—"यस्मिन्" गुणविधिनामधेयत्वेन सन्दिग्धे सति वाक्ये गुणान्तरोपदेशः प्रतीयते, तस्मिन्नुपपदस्य प्रधानेन कर्मणा नामधेयत्वेनैव "सम्बन्ध" इति ।

इति तृतीयं चित्राधिकरणम् ॥

अथ चतुर्थं तत्प्रख्याधिकरणम् ॥

## तत्प्रख्यं चाऽन्यशास्त्रम् ॥

( विषयसंशयौ )

"अग्निहोत्रं जुहुयात् स्वर्गकामः" "आघारमाघारयती"ति च समामनन्ति । तत्र संशयः—किमग्निहोत्रशब्दः आघारशब्दश्च गुणविधिः ? उत कर्मनामधेयं ? इति । उद्भिदधिकरणे यौगिकशब्दानां चित्राधिकरणे च सांविज्ञायिकशब्दानां नामधेयत्वं निरूप्येदानीं यौगिकशब्देष्वेव केषुचित्केनचिद्विशेषेण गुणविधिमाशंक्य नामधेयत्वं व्युत्पाद्यते । तत्र च "अग्निहोत्रं जुहोती"त्युत्पत्तिवाक्यमेवोदाहरणम् । अधिकारवाक्यस्य फलसम्बन्धपरस्य गुणपरत्वेऽप्युत्पत्तिवाक्यवैयर्थ्यप्रसङ्गात् । भाष्यकारेण तु विचारविषयाग्निहोत्रपदसम्बन्धितामात्रेणोदाहृतम् ।

( भाट्टमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः । भवतूद्भिदादिपदानां मत्वर्थलक्षणाभयान्नामधेयत्वम् । अग्निहोत्रपदस्य तु सिद्धान्तेऽपि 'अग्नये होत्रमस्मिन्नि'ति मत्वर्थसमानार्थबहुव्रीहिसमासव्युत्पत्तेर्मत्वर्थलक्षणादोषाभावाच्चतुर्थ्यभिहितदेवताविधित्वमेव । सति च गुणविधित्वे

"यदग्नये च प्रजापतये च सायं जुहोति" "यत्सूर्याय च प्रजापतये च प्रातर्जुहोती"ति प्रकरणप्राप्तयोर्होमयोर्मध्ये सायंहोमेऽग्नेः प्राप्तत्वात्प्रातर्होम एवाऽग्निदेवताविधानमिदम् । न च प्रातर्होमवाक्यमेव गुणविधायकम्, अग्निहोत्रवाक्यं चोत्पत्तिपरमिति वक्तव्यम्, यतोऽत्राऽनेकगुणानामुपादानं प्रतीयते । तेषां च प्राप्ते कर्मणि विधातुमशक्यत्वादत्रैव विशिष्टविधिना कर्मोत्पत्तिरग्निहोत्रवाक्य एव च गुणविधानमिति ।

ननु प्रातर्होमस्याऽव्युत्पत्तिशिष्टसूर्यप्रजापतिदेवतावरुद्धत्वान्नाऽग्निदेवताविधानं सम्भवति । मैवम्; "यत्सूर्याय च प्रजापतये चे" ति चकारद्वयमत्र श्रूयते । अन्यतरसमुच्चयस्यैकेनैव चकारेण सिद्धत्वादगत्या सायंहोमवाक्ये चकारद्वयस्येतरेतरसमुच्चयपरत्वम् । इह पुनरग्निदेवतोपनायकस्य वाक्यस्य सद्भावात्तत्समुच्चयार्थत्वमेव द्वितीयचकारश्रवणस्येति नाऽनुपपन्नं देवतान्तरविधानम् । अथवा "यदेकया जुहुयाद्दर्विहोमं कुर्यादि"त्येतद्वाक्यावगतदूरस्थदेवतारहितदर्विहोष्वेवाऽग्निदेवताविधानमिति ।

तथा "आघारमाघारयती"त्यत्राघार्येत इत्यनया व्युत्पत्त्या क्षरणयोग्यमाज्यपयःप्रभृत्याघार इति प्रतीयते । तच्चाऽऽघारमिति द्वितीयाश्रुत्याऽघारणक्रियासंस्कार्यत्वेनावगम्यमानं भक्षणप्रयुक्तफल-

चमसवदभिषवयुक्तपूतीकवच्च प्रयोजनमपेक्षते । प्रकरणे चाऽश्रुतद्रव्यमुपांशुयाजाख्यं कर्म साकांक्षमस्ति । अतः श्रुतार्थापत्तिकल्पितविनियोगविधिना तत्रैव विधीयत इति । तदुक्तम्—

श्रुतसंस्कारसम्बन्धं मुख्यैर्यद्यप्यसङ्गतम् ।
अन्यथा तदयोग्यत्वात्प्रकृतैर्याति सङ्गतिम् ॥ इति ॥

( तं. वा. १. ४. ३. पृ. ३३३ )

न चोपांशुयाजस्याऽपि "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यं" ( तै. ब्रा. ३. ३. ५. ) इत्यन्येनैवाऽऽज्यस्य प्राप्तेर्निराकांक्षत्वादनर्थकमाघारवाक्येन द्रव्यविधानमिति वाच्यम् । यतः "सर्वस्मै वा एतद्यज्ञाय गृह्यत" इत्यस्य वाक्यस्य द्रव्यरहिताङ्गप्रधानविषयत्वेन सावकाशत्वात् । अस्य च प्रकरणेनाद्रव्यकप्रधानमात्रविषयत्वादनेनैवोपांशुयाजद्रव्यविधानमिति ।

न च वाच्यम्—द्वितीयाश्रुतिः सक्तुमारुतैककपालादिषु संस्कार्यत्वं व्यभिचरति, अतः कथं तद्बलेनाज्यपयःप्रभृतीनां संस्कार्यत्वं ? कथञ्च तदुपपत्त्यर्थं कार्यान्तरोपयोगित्वमिति । यतस्तत्रैवैतद्यत्र द्रव्यं निरन्वयविनाशात्कार्यान्तरोपयोगि न सम्भवति । अत्र पुनराघारणस्य द्रव्यैकदेशक्षारणरूपत्वात् क्षारितैकदेशस्य द्रव्यस्य कार्यान्तरोपयोगो नाऽनुपपन्नः । दृष्टं चैतल्लौकिकेऽपि पानादौ

उपयोक्ष्यमाणस्य द्रवद्रव्यस्य ईषत्क्षारणसंस्कार इत्युपांशुयाज एव गुणविधानम् । एवञ्च सति प्रसिद्धार्थत्वमधिकार्थत्वं प्रवृत्तिविशेषकरत्वं चाऽनुरुद्धं भवतीति गुणविधानमेवेत्येवं प्राप्ते—

( भाट्टमतेन सिद्धान्तः )

अभिधीयते—भवेदेवं यद्यग्निहोत्रपदम् 'अग्नये होत्रमस्मिन्नि'ति व्युत्पत्त्या चतुर्थीसमासेनैव परिनिष्पाद्यते । किन्त्वग्नेर्होत्रमग्नौ होत्रमिति षष्ठीसप्तमीसमासयोरपि सम्भावितत्वात् सन्दिग्धार्थमग्निहोत्रपदं न विधेयीभूताग्निदेवतासमर्प्पकं भवति । सम्भवति तु कुतश्चिद्वाक्यात्प्राप्तमग्निं देवताभूतं प्रवृत्तिनिमित्तीकृत्य होमविधौ नामधेयीभवितुमिति तदर्थं वाक्यान्तरमपेक्षते । अस्ति च मन्त्रवाक्यं वाक्यविनियुक्तम्—"अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोती"त्यग्निदेवतासमर्पकम् । अतस्तल्लब्धमेवाग्निं निमित्तीकृत्याग्निहोत्रपदं नामधेयमिति तदवच्छिन्न एव होमो विधीयते, न त्वन्यत्र गुणो विधीयते।

ननु पूर्वपक्षी प्रातर्होमे गुणविधिं मन्यते, दर्विहोमे वा । प्रातर्होमे तावन्मन्त्रवर्णादग्निदेवताप्राप्तिर्न सिद्धान्तिनोऽभिमता त्रिदेवतत्वप्रसङ्गात् । नाऽपि दर्विहोमे, तस्य दूरस्थत्वेन मन्त्रसम्बन्धाभावात् । अतः कथं तत्प्रख्यशास्त्रवशेनाऽग्निहोत्रपदस्य नामत्वमिति ।

उच्यते—न ब्रूमो यत्र पूर्वपक्षवाद्यभिमतो गुणविधिस्तत्राऽसा-

वन्येन प्राप्त इति । किन्तु यस्य गुणस्योपादानसामर्थ्याद्धात्वर्थादुत्पार्यते विधिः, असौ श्रौतधात्वर्थविधावेव शास्त्रान्तरप्राप्तो नामप्रवृत्तिनिमित्तत्वेनानुवदितुं शक्यते । किं श्रुतिपरित्यागेनेत्ययमेवतत्प्रख्यशास्त्रार्थः ।

यदुक्तम्—

विधित्सितगुणप्रापि शास्त्रमन्यद्यतस्त्विह ।
तस्मात्तत्प्रापणं व्यर्थमिति नामत्वमिष्यते ॥ इति ॥

( तं. वा. १. ४. ३. पृ. ३३४ )

अत एव नाऽयं गुणविशिष्टहोमविधिः । तदुक्तम्—

विधीयतां विशिष्टं चेत्कर्मेत्येवं विकल्प्यते ।
न चेदन्येन शिष्टाः स्युस्तत्प्रख्यञ्चेति चोत्तरम् ॥ इति ॥

( तं वा. १. ४. ३. पृ. ३३५ )

अतः "अग्निहोत्रं जुहोती"त्येतद्वाक्यं नामावच्छिन्नकर्मोत्पादकमेव, न तु प्रातर्होमे । न च दूरस्थदर्विहोमेनाऽपि विशिष्टविधिना देवताविधायकमिति । न च "यदग्नये चे"ति वाक्यद्वयमेव होमविधायकमिति वाच्यम् । असन्दिग्धानन्यलभ्यगुणाक्रुष्टत्वेन विशिष्टविधिगौरवहेतुहोमविधानासम्भवात् । किन्त्वग्निहोत्रवाक्यप्राप्तहोमानुवादेन

२२

गुणविधायकमेव । तत्राऽपि प्राप्ते कर्मण्यनेकगुणविधानासम्भवादग्निसूर्ययोश्च मन्त्रवाक्यप्राप्तत्वात् सायंप्रातःकालयोश्च "सायं जुहोति, प्रातर्जुहोती"ति वाक्यद्वयलब्धत्वात् प्रजापतिरेवैको देवतात्वेन वाक्यद्वये विधीयते, अन्यत्सर्वमनूद्यत इति ।

तथा "आघारमाघारयती"त्यत्राऽप्याघार्यत इति व्युत्पत्त्या आघारणयोग्यमनिरूपितविशेषं द्रवद्रव्यमेव प्रतीयते । अतः सन्दिग्धार्थमाघारवाक्यमग्निहोत्रपदमिव नोपांशुयाजविधेयीभूताघारद्रव्यविशेषसमर्पकं सम्भवति । द्रव्यविशेषावगमार्थञ्च प्रकरणनिरीक्षणे "उपस्तृणानभिघारयानाज्यस्योपयजानि"ति वाक्यबलेन वा "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमि"त्यनेन वा विशेषे प्राप्ते ताभ्यामेवासन्दिग्धाभ्यां सावकाशत्वेऽप्युपांशुयाजे द्रव्यविशेषप्राप्तेरेतद्विधानं व्यर्थमेव । सन्दिग्धार्थत्वादेव चाऽऽघारपदस्य नाघार्यद्रव्यविशिष्टमाघारणं विधीयत इति सम्भवति । तथा च "चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्ये"त्यनेनैवाऽत्राऽऽज्यद्रव्यप्राप्तेस्तद्विधानवैयर्थ्याच्च । तदुक्तम्—"विधित्सितगुणप्रापी"ति । सम्भवति तु 'आघारणमाघार' इति भावव्युत्पत्त्या कर्मनामधेयत्वम् । अतस्तदवच्छिन्नमत्राऽपि कर्मैव विधीयत इति । तच्च कर्म "इन्द्र ऊर्ध्वो अध्वर इत्याघारमाघारयती"ति मन्त्रविनियोगसामर्थ्याल्लब्धेन्द्रदेवतासम्बन्धम्, तथा चतुर्गृहीतवाक्यावगतद्रव्यसम्बन्धञ्च सद्धोमरूपमेव आघार-

नामधेयं दर्शपूर्णमासाङ्गमित्यवधार्यत इति ।

प्रयोजनम्—पूर्वपक्षे कृतहोमस्य दर्विहोमस्य वा अग्निदेवतत्वं, सिद्धान्ते नेति ।

सूत्रन्तु—"तत्प्रख्यं" तत्प्रापकमग्निहोत्रपदेनाऽऽघारपदेन च यद्विधातव्यं तद्विधायकमिति यावत् । "अन्यशास्त्रं" शास्त्रान्तरञ्चाऽस्ति । तेनाऽनयोर्नामधेयत्वमेवेति ॥

इति चतुर्थं तत्प्रख्याधिकरणम् ॥

अथ पञ्चमं तद्व्यपदेशाधिकरणम् ॥

## तद्व्यपदेशञ्च ॥

( विषयसंशयौ )

"अथैष श्येनेनाऽभिचरन्यजेत" ( षड्वि ब्रा. ३. ८. ) "अथैष सन्दंशेनाऽभिचरन्यजेत" ( षड्विं. ब्रा. ३. १० ) "अथैष गवाऽभिचरन्यजेत" इति समाम्नायते । तत्र गुणविधिः, कर्मनामधेयमिति सन्देहः । उद्भिदधिकरणे यौगिकानां, चित्राधिकरणे च सांविज्ञायिकानां नामधेयत्वं निरूप्य पुनर्यौगिकानामेवोदाहरणविशेषे गुणविधित्वाशङ्कां निराकृत्येदानीं सांविज्ञायिकानामुदाहरणविशेषे गुणविधित्वाशङ्का निराक्रियते ।

( भाट्टमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः—भवतु "पञ्चदशान्याज्यानी"त्यत्र सांविज्ञायिकानामप्याज्यादिपदानां "आज्यैः स्तुवत" इति प्राप्ते स्तोत्रे पञ्चदशसंख्याविधाने, तथाऽऽज्यद्रव्यविधाने च वाक्यभेदापत्तिभिया नामधेयत्वम्, इह तु श्येनादिवाक्ये कर्म्मण्यनेकगुणविधानाभावात् श्येनपक्षिविशिष्टमेव कर्म्माभिचाररूपे फले विधीयते। न चैवं सति 'श्येनवता यागेनाऽभिचारं साधयेदि'ति वाक्यार्थाभिव्यक्तेर्मत्वर्थलक्षणादोषः। यागनामधेयत्वेऽपि श्येनसादृश्यस्य प्रवृत्तिनिमित्तत्वाद्वत्यर्थलक्षणादोषेण लक्षणादोषस्य समत्वात्।

किञ्च वत्यर्थलक्षणा हि मत्वर्थलक्षणातोऽप्यतिजघन्या, यतो वाक्यवेलायां मत्वर्थलक्षणा भवन्ती न श्येनपदस्य श्रौतस्यैवाऽर्थपरित्यागेनार्थान्तरपरत्वमापादयति, किन्तु स्वार्थापरित्यागेनैव तद्वत्तामात्रं बोधयति। वत्यर्थलक्षणा तु पदार्थवेलायामेव श्येनसादृश्येन सदृशे कर्मण्यर्थान्तरे पदं प्रवर्त्तयन्ती श्रौतार्थपरित्यागेन मत्वर्थलक्षणातो जघन्येति। तदुक्तम्—

मत्वर्थो वाक्यवेलायामेकवाक्यवशाद्भवेत्।
इवार्थः पदवेलायां गृह्यमाणस्तणोऽतिदुर्बलः॥ इति॥

( तं. वा. १. ४. ४. पृ. ३३६. )

एवञ्च सति प्रसिद्धार्थत्वमधिकार्थत्वं प्रवृत्तिविशेषकरत्वञ्चाऽनुरुद्धं भवतीति गुणविधानमेवेत्येवं प्राप्ते—

( भाट्टमतेन सिद्धान्तः )

अभिधीयते—भवेदेवं विशिष्टविधिना श्येनरूपगुणविधानं, यदि सादृश्यप्रतिपादकस्याऽर्थवादस्योपपत्तिर्भवेत् । एवं खल्वर्थवादः श्रूयते–"यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेन" ( षड्वि. ब्रा. ३. ८. ) इति । अत्र हि विधेयस्य श्येनसादृश्येन स्तुतिरवगम्यते । भेदाधिष्ठानं च सादृश्यम् । न च पक्षिरूपश्येनविधाने भेदाभावात्सादृश्यनिबन्धना स्तुतिः सम्भवति । तदुक्तम्—

विधेयं स्तूयते वस्तु भिन्नयोपमया सदा ।
न हि तेनैव तस्यैव स्तुतिस्तद्वदितीष्यते ॥ इति ॥

( तं. वा. १. ४. ४. पृ. ३३६ )

सम्भवति तु श्येननामधेययागविधाने पक्षिरूपश्येनसादृश्येन स्तुतिः । एतदेवाऽर्थवादोपदर्शितं निपत्यादानरूपं सादृश्यं नामधेयप्रवृत्तिनिमित्तञ्च । अत एवाऽत्र सादृश्यलक्षणा वेदानुमतत्वान्मत्वर्थलक्षणातः स्वरूपतो जघन्याऽपि भवन्ती न दोषमावहति ।

किञ्च गुणविधाने सति न केवलं मत्वर्थलक्षणा, किन्त्वर्थवादोपदर्शितसादृश्यनिबन्धनस्तुतिसिद्धये काल्पनिकं भेदमाश्रित्य वत्यर्थलक्षणाऽप्यवश्याङ्गीकरणीया। अतो नामधेयत्वमेवेति। एवं "सन्दंशेनाऽभिचरन्यजेत" इत्यत्रापि सादृश्यप्रतिपादकोऽर्थवादः श्रूयते–"यथा सन्दंशेन दुरादानमादत्ते" ( षड्वि. ब्रा. ३. १०. ) एवं "गवाभिचरन्यजेत" इत्यत्राऽपि श्रूयते-"यथा गावो गोपायन्ती" ति। तेनैतयोरपि कर्मनामधेयत्वमेवेति।

प्रयोजनम्—पूर्वपक्षे श्येनपक्षिणा यागो निर्वर्तयितव्यः। सिद्धान्ते त्वतिदिष्टसोमेनेति।

सूत्रन्तु—"तद्व्यपदेशं" तेन प्रसिद्धेन श्येनादिना सादृश्यनिबन्धनेऽर्थवादे व्यपदेशो यस्य तदपि कर्मनामधेयमिति ॥

इति पञ्चमं तद्व्यपदेशाधिकरणम् ॥

अथ षष्ठं वाजपेयाधिकरणम् ॥

## नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् ॥

( विषयसंशयौ )

अस्ति वाजपेयो "वाजपेयेन स्वाराज्यकामो यजेते"ति। तत्र गुणविधिः कर्मनामधेयमिति सन्देहः। उद्भिदधिकरणे यौगिकश-

ब्दानां मत्वर्थलक्षणादोषेण, चित्राधिकरणे च सांविज्ञायिकशब्दानां वाक्यभेददोषेण नामधेयत्वे व्युत्पादिते, यौगिकसांविज्ञायिकशब्दयोरेवोदाहरणविशेषेष्वपवादमाशंक्य तत्प्रख्यतद्व्यपदेशाभ्यां तन्निराकरणे कृते, इदानीमुद्भिदधिकरणचित्राधिकरणसिद्धान्तहेत्वाक्षेपेण पुनः प्रत्यवतिष्ठते ।

( भाट्टमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः—सामानाधिकरण्येन हि गुणविधाने मत्वर्थलक्षणादोषो भवति, न तु वैयधिकरण्येन । तेनेह "वाजपेयेन स्वाराज्यकामो यजेत"इति तन्त्रोच्चारितोऽयं यजिः 'यागेन स्वाराज्यं वाजपेयेन च याग'मित्येवं सम्भन्त्स्यते । मत्वर्थलक्षणा च न भविष्यति । तदुक्तम्—

करणेषूपदिष्टेषु योऽर्थात्साध्यत्वकल्पना ।
तस्यां गुणविधानेन नाऽस्ति मत्वर्थलक्षणा ॥ इति ॥

( तं. वा. १. ४. ५. पृ. ३३७. )

न चैवं सति विरुद्धत्रिकद्वयापत्तिलक्षणो वाक्यभेदोऽपि । यतो गुणत्वेन प्रधानत्वेन वा एकपदोपात्तस्य पुनरुपादाने पदावृत्तिलक्षणो वाक्यभेदो भवति । इह तु गुणप्रधानसाधारणरूपेण तन्त्रो-

च्चारितस्यैवोभयरूपप्राप्तेर्न पदावृत्तिलक्षणो वाक्यभेदः । एवं "पञ्चदशान्याज्यानी"त्यत्राऽपि तन्त्रोच्चारिताज्यपदोपनीतस्याऽऽज्यस्य स्तोत्रपञ्चदशसंख्यान्वयसहिष्णुत्वात्कुतो वाक्यभेदः ? एवञ्च सत्युद्भिदधिकरणचित्राधिकरणोक्तमत्वर्थलक्षणावाक्यभेदयोरसम्भवात् प्रसिद्धिबलवत्वेन प्रयोजनवत्तया च प्रवृत्तिविशेषकरत्वेन च गुणविधित्वमेव युक्तम् ।

नन्वेवं सत्युद्भिदादिवाक्यान्येवोदाहृत्य विचारयितुमुचितं, वाजपेयोदाहरणन्तु कुतः? सत्यम्; तान्यप्यत्रोदाहरणान्येव । किन्तु वाजपेयवाक्यमपि परिशोधितं भवतीत्येतदर्थमुदाहृतम्। तेन नामधेयत्वेन सिद्धान्त्यभिमतेषु पदेष्ववश्यं कस्यचिदुद्भिदादिषु वाजपेयलक्षणस्य गुणस्य श्रुतस्याऽस्मदुक्तन्यायेन विधानमेवेत्येवं प्राप्तेऽभिधीयते—

## ऐकशब्द्ये परार्थवत् ॥

### ( भाट्टमतेन सिद्धान्तः )

अयमभिप्रायो—भवेदेवं यद्यत्राऽपि यजिपदावृत्तिलक्षणो वाक्यभेदो न भवेत् । तथाहि—"वाजपेयेन स्वाराज्यकामो यजेत" इत्यत्र यद्यपि यजिना गुणप्रधानसाधारणो यागरूपोऽर्थोऽभिहितः, तथाऽपि न तद्रूपं वाक्यार्थान्वययोग्यम् । तेन वाक्यार्थान्वययोग्यं यद्रू-

पमस्य तत्परत्वमेव, यद्युच्चारणस्य वक्तव्यम् । तच्च रूपं फलसम्बन्धाय साधनत्वेन गुणरूपं तावदवश्याभ्युपेतव्यम् । एवं विधेयमुपादेयञ्च । न च तेन रूपेण गुणसम्बन्धः सम्भवति, गुणस्याऽपि साधनत्वेनाऽन्वयात् । ततश्च गुणसम्बन्धाय साध्यत्वेन प्रधानरूपमपि वक्तव्यम् । एवमुद्देश्यमनुवाद्यञ्च । न चैकोच्चारणे विरुद्धगुणप्रधानाद्युभयपरत्वं सम्भवतीति यजिपदोच्चारणावृत्तौ पदावृत्तिलक्षणो वाक्यभेदो दुष्परिहर एव ।

यत्र पुनः प्रधानरूपपरगुणरूपपरं वा एकमेवोच्चारणं नानापदार्थसम्बन्धयोग्यं, तत्राऽगृह्यमाणविशेषत्वाद्भवतु तन्त्रत्वमुच्चारणस्य। यथा—"अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति" ( तै. सं. ६. १. ६. ) इत्यत्र द्रव्यगुणसम्बन्धाय क्रयस्य प्रधानत्वेनैव तन्त्रोच्चारणम् । यथा च—"दशापवित्रेण ग्रहं संमार्ष्टि"त्यत्र दशाग्रहसम्बन्धाय सम्मार्गस्य गुणत्वेन तन्त्रोच्चारणमिति । तदुक्तम्—

तन्त्रत्वमैक्यरूपेण भवेत्तुल्योपकारतः ।
उपकारान्यथात्वे तु भवेदावृत्तिलक्षणम् ॥ इति ॥

( तं. वा. १. ४. ५. पृ. ३८८ )

प्रसिध्यादयश्च नामधेयत्वेऽप्यविशिष्टा एव । अतो वाजपेयादिपदानामपि नामधेयत्वमेवेति ।

प्रयोजनम्–पूर्वपक्षे वाजपेयशब्दस्य यवागूवचनत्वादोषधिद्रव्यत्वेन दार्शपूर्णमासिकविध्यन्तप्रवृत्तिः । सिद्धान्ते तु नामधेयत्वेन द्रव्यदेवताभावादव्यक्तचोदनात्वेन सौमिकविध्यन्तप्रवृत्तिरिति । भाष्यकारेण पुनः सर्वनामधेयानामेव यथायथं गुणफलोपबन्धः प्रयोजनमुक्तम्। तदुक्तं भाष्यकारेण "नामाऽपि हि गुणफलोपबन्धेनाऽर्थवत्" ( शा. भा. १. ४. ९. ) इति ।

सूत्रन्तु–"ऐकशब्द्ये"सकृदुच्चरितशब्दाभिधेयत्वे "परार्थवत्" परसम्बन्धवत् उद्देश्यत्वमनूद्यमानत्वं प्रधानत्वञ्च, स्वार्थत्वे तूपादेयत्वं विधेयत्वं गुणत्वञ्चेति विरुद्धत्रिकद्वयापत्तिरेव सूत्रितेति प्रतिपत्तव्यमिति ।

इति षष्ठं वाजपेयाधिकरणम् ॥

अथ सप्तममाग्नेयाधिकरणम् ॥

## तद्गुणास्तु विधीयेरन्नविभागाद्विधार्थे न चेदन्येन शिष्टः ॥

( विषयसंशयौ )

"यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाऽच्युतो भवति" ( तै. सं. २.६.३. ) इत्येवमादयः श्रूयन्ते । तत्र सन्देहः—किमा-

ग्नेयोऽग्नीषोमीय इत्येवमादयो गुणविधयः १ कर्मनामधेयानि १ इति ।

( प्रभाकरमतेन पूर्वोत्तरपक्षौ )

अत्र प्रभाकरेण सङ्गतिलोभादित्थमधिकरणमुपवर्णितम् । "यदाग्नेयोऽष्टाकपालो भवती"त्यत्र भवत्यर्थः प्रतीयते । न चाऽसौ विधिविषयः । पुंव्यापाररूपत्वाभावाद्विधिविषयश्च नामावच्छिन्नो गुणावच्छिन्नो वा विधीयते । अतो गुणविधिनामधेयत्वयोरसम्भवात्तृतीयप्रकाराभावाच्चाऽप्रतिपादकतयाऽप्रामाण्यमाग्नेयचोदनानामिति पूर्वः पक्षः । सिद्धान्तस्तु यथाभाष्यमेवेति ।

( प्रभाकरमतदूषणम् )

तदिदमसङ्गतम् ; वक्ष्यमाणपूर्वपक्षन्यायेन नामधेयत्वेनैव प्रामाण्योपपत्तेः । अप्रामाण्यपक्षोऽयं स्वपक्षाग्रहमात्रेणैवेति यथावार्त्तिकमेवाऽधिकरणं प्रस्तूयते । सिद्धेषु नामधेयेष्विदानीं तदपवादः क्रियते ।

( भाट्टमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः । "यदाग्नेयोऽष्टाकपालो भवती"त्यत्राऽष्टाकपालः स्वतो भवतीति वाक्यार्थासम्भवाद्भावना ताव-

दवश्यं कल्पनीया । अष्टाकपालस्य चाऽपुरुषार्थत्वेन भाव्यत्वानर्हत्वादक्रियारूपत्वेन च फलसाधनत्वासम्भवात्फलभावनानुरक्तक्रियाकल्पनायां क्रमपठितयाज्यानुवाक्यासमर्पिताग्निदेवतावशेनाऽष्टाकपालद्रव्यकयागरूपैव क्रिया कल्प्यते । सा च द्रव्यदेवताविशिष्टा पञ्चमलकारेण विधीयते । न च स्ववाक्योपात्ताग्नेयतद्धितस्यैव देवतासमर्पकत्वम् । 'अग्निर्देवता, अग्नेर्जातः, अग्नये हित' इति विनिगमनाभावेन तस्य सन्दिग्धार्थत्वात् । मन्त्रस्य त्वनुष्ठेयार्थप्रकाशकत्वेनाऽसन्दिग्धार्थत्वान्मन्त्रादेव देवताप्राप्तिः । तथा च सत्याग्नेयपदं तत्प्रख्यन्यायेन नामधेयमेवेति । यथा—"अग्निहोत्रं जुहोति"त्यत्राऽग्निहोत्रपदमित्येवं प्राप्तेऽभिधीयते—

( भाट्टमतेन सिद्धान्तः )

भवेदेवं यद्यत्राऽऽग्नेयपदमष्टाकपालपुरोडाशसमानाधिकरणमसन्दिग्धदेवताभिधायितद्धितान्तं प्रथममेव न श्रूयेत । न चाऽस्य सन्दिग्धार्थत्वं, विधेयीभूताकांक्षितदेवतापरत्वे सत्यनाकांक्षितानुवाद्यार्थत्वस्याऽसम्भवात् । तेन देवतातद्धितान्ताग्नेयपदादेव प्रथमं द्रव्यदेवतासम्बन्धानुमितयागविधेः सिद्धत्वान्न तदवधीरणेन चरमभाविजघन्यतरमान्त्रवर्णिकदेवताकल्पनया यागविधानमाश्रित्याऽनन्यथासिद्धस्याऽऽग्नेयपदस्य नामधेयत्वाश्रयणं युक्तमिति । अग्नि-

होत्रपदे तु यथा चतुर्थीसमासस्य विधेयीभूतदेवतापरत्वं, तथा सप्तमीसमासस्याऽपि विधेयीभूतहोमाधिकरणपरत्वात्सन्दिग्धत्वमेव ।

न चाऽत्राऽपि "यदाहवनीये जुहोति" ( तै. ब्रा. १.१.१०. ) इत्यनारभ्यश्रुतवाक्येनैवाऽऽधारप्राप्तेरसन्दिग्ध एव चतुर्थीसमास इति वक्तव्यम् । अनाहवनीयाग्निमात्राङ्गत्वप्रतिपादनेनैव विध्युपपत्तेः । तेनाऽत्राऽत्रप्यं सन्देहव्युदासार्थं प्रकरणानुसन्धानं वक्तव्यम् । तत्र च मन्त्रवर्णादेव देवतायाः प्राप्तत्वात् भवत्वग्निहोत्रपदं नामधेयं, न त्विह तथा, प्रथममेव देवतावाचितद्धितबलेन निस्सन्दिग्धदेवताभावावगमादिति ।

प्रयोजनम्—पूर्वपक्षे आग्नेयशब्दस्य कर्मवचनत्वात् "आग्नेयं चतुर्धा करोति"( आप. श्रौ. ३.३.२. )इत्याग्नेयकर्मण एव चतुरावृत्तत्वम् । सिद्धान्ते त्वाग्नेयपदस्य गुणवचनत्वादाग्नेयपुरोडाशस्यैव चतुर्द्धाकरणमिति ।

सूत्रन्तु—"विधानार्थे"तद्धितान्त आग्नेयपदे "अविभागात्" तदविनाभूतत्वाद्द्रव्यदेवतासम्बन्धाक्षिप्तं यागाख्यं कर्म गुणाश्चाऽग्निपुरोडाशादयो विशिष्टविधिना विधीयन्ते । तत्कर्म ते गुणाः "न चेदन्येन शिष्टाः"विहिता इत्यर्थः ॥

इति सप्तममाग्नेयाधिकरणम् ॥

अथाऽष्टमं बर्हिराज्याधिकरणम् ॥

# बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥

( विषयसंशयौ )

बर्हिराज्ययोः पुरोडाशे च सन्देहः—किमेष संस्कारशब्दः ? उत जातिनिबन्धनः ? इति ।

( प्रभाकरमतेन पूर्वोत्तरपक्षौ )

अत्र प्रभाकरेण सङ्गतिलोभादतः प्रभृत्यधिकरणत्रयमेतदित्थमुपवर्णितम् । जातिनिमित्तसंस्कारनिमित्तयौगिकत्वानध्यवसायादप्रामाण्यं पूर्वपक्षे । सिद्धान्ते तु यथाभाष्यं प्रामाण्यमिति ।

( प्रभाकरमतदूषणम् )

तदयुक्तम् ; वक्ष्यमाणपूर्वपक्षन्यायेनैव सर्वत्राऽध्यवसायसम्भवात् । अतो यत्किञ्चिदेतदिति यथावार्त्तिकमेवाऽधिकरणं प्रस्तूयते ।

( भाट्टमतेन पूर्वपक्षः )

इदानीं कर्मनामधेयप्रसङ्गेन द्रव्यनामस्वपि प्रवृत्तिनिमित्तमधिकरणत्रयेण निरूप्यते । तत्रैतदधिकरणे तावदयं पूर्वपक्षिणोऽभि-

सन्धिः। "बर्हिर्लुनाती"त्यत्र तद्वाक्यविहितलवनसंस्कृते कुशे बर्हिःशब्दं याज्ञिकाः प्रयुञ्जाना दृश्यन्ते। तथा "आज्यं विलापयती"त्येतद्वाक्यविहितविलापनसंस्कृते घृते आज्यशब्दं, एवं "पुरोडाशं प्रथयन्ती"त्येतद्वाक्यविहितप्रथनसंस्कृते पिष्टके पुरोडाशशब्दम्। तेन यथा "यूपं छिनत्ती"त्येतद्वाक्यविहितछेदनजनितसंस्कारवति काष्ठे यूपशब्दप्रयोगदर्शनाद्यच्छिद्यते स यूप इति संस्कारवचनत्वं यूपशब्दस्य, तथा यल्लूयते तद्बर्हिः, यद्विलाप्यते तदाज्यं, यत्प्रथ्यते स पुरोडाश इति सर्वत्र संस्कारवचनत्वमेव।

ननु यूपशब्दस्याऽलौकिकार्थत्वेन संस्कृतेष्वेव प्रयोगदर्शनाद्भवतु संस्कारवचनत्वम्। बर्हिरादिशब्दानां तु लोकेऽसंस्कृतेष्वपि प्रयोगदर्शनात्कथं संस्कारवचनत्वम्। मैवम्; "शास्त्रस्था वा तन्निमित्तत्वात्" (जै. सू. १. ३. ९.) इति न्यायेन शास्त्रस्थानामेव याज्ञिकानां प्रसिद्धिर्बलीयसी। सा तु संस्कृतगोचरैव। अतस्तद्विरोधादशास्त्रस्थप्रसिद्धेर्गौणत्वेनाऽप्युपपत्तेः संस्कारवचनत्वं बर्हिरादिशब्दानामित्येवं प्राप्तेऽभिधीयते—

( भाट्टमतेन सिद्धान्तः )

भवेदेवं यदि शास्त्रस्थाशास्त्रस्थप्रयोगयोर्विरोधो भवेत्। नचैतदस्ति। तथाहि—यस्यामेव कुशजातौ बर्हिःशब्दमशास्त्रस्थाः

प्रयुञ्जते सा जातिः शास्त्रस्थप्रयोगेऽप्यनपगतैव । तेन नैवोभयप्रयोगानुगतैकजातिवचनत्वेनैवाविरोधात्सकलप्रयोगोपपत्तौ क्वचिद्गौणत्वं क्वचित्संस्कारवचनत्वमित्युपपद्यते । तदुक्तम्—

एकदेशेऽपि यो दृष्टः शब्दो जातिनिमित्तकः ।
तदत्यागान्न तस्याऽस्ति निमित्तान्तरकल्पना ॥ इति ॥

( तं. वा. १. ४. ७. पृ. ३४३ )

एवञ्च सति "बर्हिर्लुनाति"इति पूर्वसिद्धबर्हिरुद्देशेन लवनविधानात् यद्बर्हिस्तल्लुनातीति यथावस्थितवचनोपपत्तौ यल्लुनाति तद्बर्हिरिति वचनव्यक्तिविपर्यासोऽपि न भविष्यति । यूपे तु गत्यन्तराभावात्तथाश्रितम् । तदुक्तम्—

न च यूपादितुल्यत्वमन्यथाऽप्युपपत्तितः ।
लोकादलभ्यमानार्थास्ते ह्यगत्या तथाश्रिताः ॥ इति ।

( तं. वा. १. ४. ७. पृ. ३४३ )

प्रयोजनम्—पूर्वपक्षे "बर्हिषा यूपावटमवस्तृणाती"ति संस्कृतैरेवास्तरितव्यम् । सिद्धान्ते तु कुशमात्रेणैवेति ।

सूत्रन्तु—"बर्हिराज्य"पदार्थयो"रसंस्कारे" असत्यपि संस्कारे

"शब्दलाभात्" बर्हिराज्यशब्दप्रयोगात् "अतच्छब्दः" असंस्कारशब्दो बर्हिःशब्द आज्यशब्दश्चेति ।

इत्यष्टमं बर्हिराज्याधिकरणम् ॥

अथ नवमं प्रोक्षण्यधिकरणम् ॥

## प्रोक्षणीष्वर्थसंयोगात् ॥

( विषयसंशयौ )

"प्रोक्षणीरासादयती"ति प्रोक्षणीशब्दं प्रति सन्देहः—संस्कारशब्दो जातिनिमित्तो यौगिको वेति ।

( भाट्टमतेन पूर्वपक्षः )

तत्राऽयं पूर्वपक्षिणोऽभिसन्धिः । बर्हिराज्यशब्दवदसंस्कृतास्वप्सु प्रोक्षणीशब्दप्रयोगादर्शनात्संस्कारवचनत्वमेवेति प्रथमः पूर्वपक्षः ।

तदयुक्तम्; मा नाम सर्वत्र प्रयुज्यताम् । प्रयुज्यते तावत्केषुचिद्देशविशेषेष्वसंस्कृतास्वप्सु । तदुक्तं भाष्यकारेण—"प्रोक्षणीभिरुद्वेजिताः स्म इति कस्मिंश्चिद्देशे भवन्ति वक्तारः" ( शा. भा. १.४.९. ) इति । अतो बर्हिराज्यन्यायेनैव न तावत्संस्कारवचनत्वम् । नाऽपि

यौगिकार्थत्वं, 'प्रकर्षेणोद्यते ऽनेने'त्यस्य योगस्य घृतमूत्रादिसाधारण्येन जलजातिविनिगमनाभावात् । किञ्चोपसर्गधातुप्रत्ययार्थपरामर्शेन यौगिकप्रतीतिर्विलम्बेनोपजायते । समुदायप्रसिद्धिस्त्वत्तरग्रहणमात्रापेक्षिणी नाऽवयवानुसन्धानमपेक्षते । अतस्तया विप्रकृष्यतेऽवयवप्रसिद्धिः । तदुक्तम्—

अक्षरैरेव बुद्धन्ते समुदायप्रसिद्धिषु ।
अर्थभागोपसंहारादितरा विप्रकृष्यते ॥ इति ॥

( तं. वा. १. ४. ८. पृ. ३४४. )

अतः समुदायप्रसिद्धिबलेन बर्हिराज्यादिवज्जातिवचनत्वमेवेत्येवं प्राप्तेऽभिधीयते—

( भाट्टमतेन सिद्धान्तः )

भवेदेवं यद्यत्र समुदायप्रसिद्धिः क्लृप्ता भवेत् । तत्रैव हि सा कल्प्यते, यत्राऽवयवार्थानुसारव्यतिरेकेण प्रयोगो दृश्यते । यथा वृक्षविशेषे अश्वकर्णशब्दस्य । तदुक्तम्—

असत्स्ववयवार्थेषु योऽन्यत्राऽर्थे प्रयुज्यते ।
तत्रानन्यगतित्वेन समुदायः प्रसिध्यति ॥ इति ॥

( तं. वा. १. ४. ८. पृ. ३४५ )

अतः समुदायशक्तेरक्लृप्तत्वात्क्लृप्तावयवशक्तिद्वारेणैव च प्रयोगोपपत्तेः प्रोक्षणीशब्दस्य यौगिकत्वमेव ।

ननु घृतमूत्रादिसाधारणत्वाद्योगोऽतिव्यापकः । सत्यम्; ल्युडन्तात्प्रपूर्वादुक्षतेर्धातोः सेचनसमर्थं द्रवद्रव्यमात्रमेवाऽवगम्यते । बहुवचनान्तस्त्रीप्रत्ययवशात्तु नित्यबहुवचनान्तस्त्रीलिङ्गाच्छब्दार्थ एव निर्णीयते । तेन "प्रोक्षणीरप आसादये"ति वाक्यार्थे सिद्धे यौगिकत्वमेव प्रोक्षणीशब्दस्येति सिद्धम् ।

प्रयोजनम्—विकृतौ यत्र श्रूयते "घृतं प्रोक्षणं भवति" । (मै. सं. २.१.५.) इति "प्रोक्षणीरासादय" (तै.ब्रा.३.२.७.) इति च चोदकातिदेशप्राप्तः, तत्र यदि संस्कारवचनत्वम्, तदा 'प्रोक्षणीरासादये' त्यविकृतस्यैव प्रयोगः । अथ जातिवचनत्वं, तदोहेन 'घृतमासादये'ति प्रयोगः । सिद्धान्ते तु यौगिकत्वेन वाच्यलिङ्गत्वात् घृतस्य नपुंसकलिङ्गत्वेन 'प्रोक्षणमासादये'ति प्रयोगः ।

सूत्रन्तु—"प्रोक्षणीषु" यौगिकत्वं "अर्थसंयोगात्" अवयवार्थसंयोगादित्यर्थः ॥

इति नवमं प्रोक्षण्यधिकरणम् ॥

अथ दशमं निर्मन्थ्याधिकरणम् ॥

## तथा निर्म्मन्थ्ये ॥

( विषयसंशयौ )

"निर्मन्थ्येनेष्टकाः पचन्ती"ति संस्कृते दर्शनात्संस्कारशब्दो निर्मन्थ्य इति । असंस्कृतेऽपि दृश्यते 'निर्मन्थ्यमानय पचयामह' इति निर्मन्थनयोगात्पूर्ववद्यौगिक इति स्थितिः ।

(भाट्टमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः । निर्मन्थ्यशब्दोऽयं याज्ञिकैः संस्कृते प्रयुज्यते । न चाऽयं संस्कारवचनः, असंस्कृतेऽपि क्वचिद्दर्शनात् । नाऽपि यौगिकः, निर्मन्थनभवो हि निर्मन्थ्यः । स च नवनीतादावप्यविशिष्टः, तेषामपि निर्मन्थनभवत्वात् । न चाऽत्र प्रोक्षणीतुल्यत्वम् । तत्र योगस्य घृतादिसाधारण्येऽपि ङाबन्तत्वात्प्रोक्षणीशब्दस्य स्त्रीलिङ्गनित्यबहुवचनान्तत्वाच्छब्दसामानाधिकरण्ययोग्यतया भवतु तदर्थविषयत्वम् । इह तु तृतीयान्तस्य "निर्मन्थ्येने" तिपदस्याऽग्निनवनीतादिसाधारणत्वान्नाऽग्निवचनत्वनिर्णयस्सम्भवतीति जातिवचनत्वमेवेत्येवं प्राप्तेऽभिधीयते—

( भाट्टमतेन सिद्धान्तः )

भवेदेवं यद्यत्राऽग्निप्रतीतिरन्यतो न भवेत् । एवं हि श्रूयते—"निर्मन्थ्येनेष्टकाः पचन्ती"ति । तेन योगस्य साधारण्येऽपि पाकसमभिव्याहारादत्राऽप्यग्निविशेषणात्तौ यौगिकत्वमेव ।

प्रयोजनम्—संस्कारवचनत्वे संस्कृतेनाऽग्निनेष्टकाः पक्तव्याः, जातिवचनत्वेऽग्निमात्रेण, यौगिकत्वे त्वचिरनिर्मथितेन । अत्र यद्यपि सूर्यकान्तादिनिवर्त्तकतयाऽपि निर्म्मन्थ्यशब्दस्याऽर्थवत्वान्नाऽचिरनिर्मथिताग्निलाभः, तथाऽपि पाकात्त्रेपप्राप्तेऽग्नौ मथनस्य पाकाङ्गत्वेन लोहितोष्णीषवद्विधानेऽङ्गानाम्मुख्यदेशकालकर्तृकत्वादचिरनिर्म्मथितप्राप्तिरिति । तदुक्तम्—

पाकेनाऽग्नेरुपात्तत्वात्तद्विशेषपरा श्रुतिः ।
तच्च पाकाङ्गभूतत्वात्तद्देशादौ करिष्यत ॥ इति ॥

( तं. वा. १.४. ९. पृ. ३४५ )

सूत्रन्तु—यथा प्रोक्षणीशब्दस्य यौगिकत्वं, "तथा निर्मन्थ्येऽपी"त्यर्थः ॥

इति दशमं निर्मन्थ्याधिकरणम् ॥

अथैकादशं वैश्वदेवाधिकरणम् ॥

## वैश्वदेवे विकल्प इति चेत् ॥

( विषयसंशयौ )

चातुर्म्मास्ये प्रथमे पर्वणि वैश्वदेवे सन्देहः—"वैश्वदवेन यजेत" (तै.ब्रा.१.४.१०)इति किं वैश्वदेवशब्दो गुणविधिः कर्मनामधेयमिति ।

( प्रभाकरमतेन पूर्वोत्तरपक्षौ )

अत्र प्रभाकरेण सङ्गतिलोभादित्यतधिकरणमुपवर्णितम् । वैश्वदेवशब्दस्य न तावत्कर्मनामधेयत्वं, विनैव मत्वर्थलक्षणया तद्धितान्तत्वेन गुणविधानेऽपि कर्म्मसामानाधिकरण्योपपत्तेः । नाऽपि गुणविधानम् । प्रकृतसकलयागानामेवोत्पत्तिशिष्टदेवतावरुद्धत्वेन देवतारूपगुणान्तरविधानासंभवात् । नाऽपि विश्वेदेवविशिष्टकर्म्मान्तरविधानम् । प्रकृतविश्वेदेवविशिष्टामिक्षायागप्रत्यभिज्ञानेन कर्म्मान्तरस्य बुद्धौ निवेशयितुमशक्यत्वात् । तस्मान्न गुणविधानम्, नाऽपि कर्मनामधेयत्वमित्यनध्यवसायादप्रामाण्यमिति पूर्वः पक्षः । सिद्धान्तस्तु—यथाभाष्यं नामधेयत्वेनैवेति ।

( प्रभाकरमतदूषणम् )

तदयुक्तम् ; वक्ष्यमाणपूर्वपक्षन्यायेन गुणविधित्वेनैवाद्धयव- सायोपपत्तेर्यत्किञ्चिदेतदिति यथावार्त्तिकमेवाऽधिकरणं प्रस्तूयते । नामधेयपञ्चकं सापवादं निरूप्य प्रसङ्गेनाऽधिकरणत्रये द्रव्य- नामसु प्रवृत्तिनिमित्ते निर्णीते इदानीमेकदेशगतप्रवृत्तिनिमित्तेना- ऽपि प्रकृतानेककर्मनामधेयत्वं भवतीति प्रतिपादयितुं पुनरारम्भः ।

( भाट्टमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः । वैश्वदेवशब्देन हि देवतावि- शिष्टं द्रव्यं प्रतिपाद्यते । द्रव्यं च प्रकृतेषु यागेषु प्राप्तत्वान्न विधिविष- यः । किन्तु लोहितोष्णीषन्यायेन विशेषणीभूताप्राप्तदेवताविषयोऽयं विधिः । न च देवताया द्रव्यविशेषणत्वं, मत्वर्थलक्षणया "सास्य देव- ते"ति ( पा.सू.४.२.२४. ) तद्धितस्यैव विशिष्टविषयत्वात् । अतो नाऽत्र गुणविधौ मत्वर्थलक्षणादोषः । प्राप्ते कर्मणि देवतारूपैकगुण- विधानात् न च वाक्यभेदोऽपि । एकस्मिन्नेवाऽऽमिक्षायागे विश्वे- देवप्राप्तेरितरेष्वप्राप्तत्वान्न तत्प्रख्यन्यायेन वैयर्थ्यम् । न च विश्वैर्देवैः श्येनवत्कस्यचित्कर्मणः सादृश्यप्रतिपादकं वचनमस्ति, येन तद्व्य- पदेशविषयत्वम् । न चाऽत्र फलोपादानमस्ति, येन वाजपेयवद्वैरू- प्यम् । अतो गुणविधित्वप्रतिपक्षसकलहेत्वभावाद् गुणविधित्वमेव ।

किञ्च कर्मनामधेयत्वे कृत्स्नमेव वाक्यमनुवादकं सदनर्थमेवाऽऽपद्येत । न च "प्राचीनप्रवणे वैश्वदेवेन यजेत" "वसन्ते वैश्वदेवेन यजेते"ति प्रयोगवाक्यापेक्षितसमुदायीकरणमेवाऽनुवादप्रयोजनमिति वक्तव्यम् । एतद्वाक्यन्यायेन वैश्वदेवपदस्य प्रयोगवाक्येऽपि समुदायानुवादकत्वसम्भवात् । न च नामधेयप्रवृत्तिनिमित्तमप्यस्ति । प्रत्येकं समुदाये च विश्वेदेवसम्बन्धाप्राप्तेः । तदुक्तम्—

न समस्तानुवादस्य किञ्चिदस्ति प्रयोजनम् ।
विश्वे देवा न च प्राप्ताः प्रत्येकं संहतेषु च ॥ इति ॥

(तं. वा. १. ४. १०. पृ. ३४६)

अतो गत्यन्तराभावादुत्पत्तिशिष्टगुणावरोधेऽप्या'नर्थक्यप्रतिहतानां विपरीतं बलाबलमि'ति न्यायेन वा निष्कृष्टयागानुवादेन वा प्रकृतेष्वामिक्षायागव्यतिरिक्तेषु विश्वेदेवदेवतानां विधानमिति । अतो "वैश्वदेवेन यजेते"त्यत्र वैश्वदेवपदे विश्वेदेवविधानाश्रयणादग्न्यादिभिर्विश्वेदेवानां विकल्प इत्येवं प्राप्तेऽभिधीयते—

## न प्रकरणात्प्रत्यक्षविधानेन(१) न हि प्रकरणं द्रव्यस्य ॥

(भाट्टमतेन सिद्धान्तः)

अयमभिप्रायः—भवेदेवमुत्पत्तिशिष्टगुणावरोधेऽपि गुणविधानं

१. प्रत्यक्षविधानादिति सर्वत्र सूत्रपाठ उपलभ्यते ।

यद्यगतिर्भवेत् । अस्ति तु तत्प्रख्यन्यायेन नामधेयत्वमेव गतिः । ननु "वैश्वदेवेन यजेते"ति वैश्वदेवपदस्य प्रकृतसकलयागनामधेयत्वमपेक्षितम् । न चाऽऽमिक्षायागव्यतिरिक्तेषु यागेषु वाक्यान्तरेण विश्वेदेवप्राप्तिरस्ति । तत्कथं तत्प्रख्यन्यायेनाऽपि नामधेयत्वमुच्यते । स्यादेवं यदि प्रकृतेषु सर्व्वकर्म्मसु मुख्यमेव वैश्वदेवपदं ब्रूमः । अपि तर्हि लाक्षणिकम् । लक्षणा चैकदेशद्वारेणाऽपि छत्रिन्यायेन समुदाये नाऽनुपपन्ना । न चैवं सति लक्षणादोषादेव गुणविधित्वमिति वाच्यम् । उत्पत्तिशिष्टदेवताख्यगुणावरुद्धे कर्म्मणि विषमशिष्टाष्टदोषदुष्टविकल्पापादकस्य देवतान्तररूपगुणविधानस्य लोकप्रसिद्धच्छत्रिन्यायेनाऽनुवादगतलक्षणातोऽतिजघन्यत्वात् । तदुक्तम्—

गुणान्तरावरुद्धत्वान्नाऽवकाश्यो गुणोऽपरः ।
विकल्पोऽपि न वैषम्यात्तस्मान्नामैव युज्यते ॥ इति ॥

( तं. वा. १. ४. १०. पृ. ३४७ )

न च सिद्धान्ते निष्प्रयोजनः सर्वानुवादः । "प्राचीनप्रवणे वैश्वदेवेन यजेते"ति प्रयोगवाक्यापेक्षितसमुदायकरणेनैव प्रयोजनवत्त्वात् । न चैतद्वाक्यन्यायेनैव प्रयोगवाक्येऽपि वैश्वदेवपदस्य समुदायकरणासम्भवाद्वैयर्थ्यमस्येति वाच्यम् । देशसम्बन्धपरस्य प्रयोगवा-

क्यस्य सति सम्भवे समुदायापादकत्वेनोभयपरत्वगौरवाश्रयणा-योगात् ।

किञ्च वैश्वदेववाक्यस्याऽसति समुदायकरणे देशसम्बन्धक-रणेन प्रयोजनवतः प्रयोगवाक्यस्य मुख्यवैश्वदेवपदानुरोधेनैकवच-नानुरोधेन चैकस्यैवाऽऽमिक्षायागस्य देशविधानेनाऽर्थवत्त्वान्न वैश्व-देवावैश्वदेवलक्षणार्थत्वे कारणमस्ति । अनुवादवाक्यस्य तु प्रयो-जनान्तराभावात्समुदायकरणार्थं वैश्वदेवावैश्वदेवलक्षणार्थत्वं युक्त-मेव । तस्मात् "वैश्वदेवेन यजेते"त्यत्र लक्षणया वैश्वदेवावैश्वदे-वप्रकृतसकलयागनामधेयमेव वैश्वदेवपदमिति ।

प्रयोजनम्—पूर्वपक्षेऽग्न्यादिभिर्विश्वेदेवानां विकल्पः । सिद्धान्ते तु नित्यमेवाऽग्न्यादिदेवतावत्त्वमेवेति ।

सूत्रन्तु—"न प्रकरणात्" विश्वेदेवानां सर्वैः सम्बन्धः । प्रत्य-क्षविधानेनाऽग्न्यादिभिः सम्बन्धात् । "न हि प्रकरणं द्रव्यस्य" प्रत्यक्षविहितदेवतासम्बन्धबाधने प्रकरणं न समर्थमित्यर्थः ॥

इत्येकादशं वैश्वदेवाधिकरणम् ॥

अथ द्वादशं वैश्वानराधिकरणम् ॥

## पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥

( विषयसंशयौ )

"वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालस्त्रिवृतैवाऽस्मिंस्तेजो दधाति, यद्दशकपालो विराजैवाऽस्मिन्नन्नाद्यं दधाति, यदेकादशकपालस्त्रिष्टुभैवाऽस्मिन्निन्द्रियं दधाति, यद्द्वादशकपालो जगत्यैवाऽस्मिन्पशून्दधाति, यस्मिन् जात एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवति" ( तै. सं. २. २.५ ) इति कपालविकल्पाः श्रूयन्ते । तत्र सन्देहः—किमष्टत्वादयो गुणविधयः ? उताऽर्थवादाः ? इति ।

( प्रभाकरमतेन पूर्वोत्तरपक्षौ )

अत्र प्रभाकरेण सङ्गतिलोभादित्थमधिकरणमुपवर्णितम् । "यदष्टाकपालो भवती"त्यादीनां विहितस्मारकत्वाभावान्न मन्त्रत्वेनाऽन्वयः । भावार्थसामानाधिकरण्याभावान्नाऽपि नामधेयत्वेन । अष्टत्वादिगुणान्वययोग्यभावार्थासन्निधेर्नाऽपि गुणविधित्वेन । न च वैश्वानरयागे गुणविधानं, तस्य द्वादशसंख्यावरुद्धत्वेन संख्यान्तरविधानासम्भवात् । अष्टत्वादिना विधेयद्वादशसंख्या-

स्तुत्यसंभवान्नाऽर्थवादत्वेन । तेन सर्वथा विध्यन्वयाभावादप्रामाण्यमेव "यदष्टाकपालो भवती"त्यादीनामिति पूर्वपक्षः । सिद्धान्तस्त्वर्थवादत्वेन यथाभाष्यमेवेति ।

( प्रभाकरमतदूषणम् )

तदयुक्तम् ; वक्ष्यमाणपूर्वपक्षन्यायेन गुणविधित्वेनैवाऽन्वयसम्भवादिति यथावार्त्तिकमेवाऽधिकरणं प्रस्तूयते । गुणविधिप्रतियोगिकं नामधेयत्वं निरूप्य प्रसङ्गेनेदानीं गुणविधिप्रतियोगिकमर्थवादत्वं निरूप्यते ।

( भट्टमतेन पूर्वपक्षः )

तत्राऽयं पूर्वपक्षिणोऽभिसन्धिः । "वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात" इत्यत्र द्रव्यदेवताविशिष्टकर्म्मविधानाद्द्वादशकपालविधानं तावद्व्यवस्थितमेव । नाऽपि तदनन्तरश्रुतानामष्टाकपालादीनामेकादशकपालपर्यन्तानामन्या गतिरस्ति । यतो न तावन्नामधेयत्वेनाऽस्य गतिः । द्वादशकपाले कर्म्मण्यष्टाकपालनाम्नः प्रवृत्तिनिमित्ताभावात् । नाऽप्यर्थवादत्वेन । द्वादशकपालस्याऽष्टाकपालत्वेन स्तुत्यसम्भवात् ।

ननु द्वादशकपालेऽष्टाकपालोऽप्यन्तर्गत एव । अतो नामधेय-

त्वमर्थवादत्वं वा भविष्यतीति । मैवम् ; महासंख्यायामेकत्वातिरिक्तावान्तरसंख्याया अभावात् । अपेक्षाबुद्धिजन्या हि संख्या । न हि यावतः संख्येयानपेक्ष्य द्वादशसंख्योत्पद्यते तावत एवापेक्ष्याऽष्टसंख्याऽप्युत्पद्यते । यतः संख्यान्तरोत्पत्तौ संख्यान्तरोत्पत्तिहेतुभूतबुद्ध्यन्तराभावात्संख्यास्वभावाच्च । न हि संख्या सत्तामात्रेण संख्येयमवच्छिनत्ति, किन्तु संख्यान्तरव्यवच्छेदेनैवेति न द्वादशसंख्यायामष्टत्वादिसंख्यान्तर्गतिः । किन्तु संख्यान्तरोत्पत्तियोग्यान्यधिष्ठानानि परं सन्ति । न चाऽष्टाकपालादिशब्देनाऽधिष्ठानान्यभिधीयन्ते । येन यथाकथञ्चिदपि नामधेयत्वमर्थवादत्वं वा भवेत्।

अभ्युपेत्यवादेनाऽप्युच्यते । अस्तु वा महासंख्यास्ववान्तरसंख्या, तथाऽप्यष्टसु कपालेषु संस्कृतः पुरोडाशोऽष्टाकपाल इति संस्कृततद्धितोऽयम् । न च द्वादशकपालवाक्येऽष्टत्वस्य द्वादशसंख्यापूरकचतुष्टनिरपेक्षस्य पुरोडाशसंस्कारार्थकपालविशेषणत्वमवगतं, किन्तु चतुष्टापेक्षस्यैव । तद्यद्यप्यष्टाकपालवाक्येऽप्यष्टत्वस्य चतुष्टापेक्षस्यैवोपादानमभिमतम् , न च तत्सम्भवति । सापेक्षत्वेन समासतद्धितयोरुत्पत्त्यसम्भवात् ।

अथ चतुष्टनिरपेक्षस्यैव द्वादशकपालान्तर्गतस्याऽष्टत्वस्य पुरोडाशसंस्कारार्थकपालविशेषणत्वमुच्यते । तथा सति द्वादशकपालवा-

क्ये तथाभूतस्याऽष्टत्वस्याऽप्राप्तत्वान्न नामधेयत्वं नाऽप्यर्थवादत्वं, किन्तर्हि गुणविधित्वमेव । तदुक्तम्—

यद्यप्यर्थात्मनाऽस्त्येव महासंख्यास्ववान्तरा ।
अपरिच्छेदकत्वात्तु नाऽसौ कर्मविशेषणम् ॥ इति ॥

( तं. वा. १. ४. ११. पृ. ३४९. )

तथा—

पूर्वज्ञातार्थवाचित्वे नामधेयार्थवादने ।
अप्राप्तत्वादिहैते स्युर्वैश्वदेवविकल्पवत् ॥ इति ॥

( तं. वा. १. ४. ११. पृ. ३४९. )

न च प्रकृतस्य वैश्वानरयागस्योत्पत्तिशिष्टद्वादशत्वावरुद्धत्वात्कथं तत्राऽष्टत्वादिगुणविधानमिति वाच्यम् । यस्मादेकमिदं वाक्यमनेकसंख्याविशिष्टवैश्वानरयागविधायकम् , अतः सर्वेषामेवोत्पत्तिशिष्टत्वान्न बलाबले कश्चिद्विशेषः । एकवाक्यविहितत्वेऽपि संख्यास्वभावादेव च विकल्पः । यस्यैव तु द्वादशकपालस्य विहितत्वात्पुनर्विधानं न सम्भवति, तस्यैवाऽन्ते कीर्त्तनमनुवादार्थमेवेति । अतः "पूर्ववन्तो" विदितपूर्वमर्थमभिदधति, ते "अविधानार्थाः" । अतोऽष्टत्वादि "समाम्नाये तत्सामर्थ्यं" विधानसामर्थ्यमेवेत्येवं प्राप्ते

अभिधीयते-

## गुणस्य तु विधानार्थं तद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्ताऽस्ति ॥

( भाट्टमतेन सिद्धान्तः )

अयमभिप्रायः--भवेदेवं यद्युत्पत्तिशिष्टद्वादशत्वावरुद्धे वैश्वानरयागेऽष्टत्वादयो विधातुं शक्येरन् । न चैकवाक्यत्ववशेन सर्वेषामेवोत्पत्तिशिष्टत्वान्न द्वादशत्वेनाऽवरोध इति वाच्यम् । गुणविधौ सत्येकवाक्यत्वस्यैवाऽभावात् । "अर्थैकत्वादेकं वाक्यं साकाक्षं चेद्विभागे स्यादि"ति (जै. सू. २. १. ४६.) खल्वेकवाक्यत्वलक्षणम् । न चैकार्थत्वम्, परस्परविरुद्धानां संख्यानामेकभावनान्वयित्वासम्भवात् । नाऽपि विभज्यमानसाकाङ्क्षत्वं, परस्परविरोधादेवाऽन्योन्याकाङ्क्षाया अभावात् । अतो न तावद्द्वादशकपालवैश्वानरयागे गुणविधानं सम्भवति । नाऽपि विपरिणतवैश्वानरपदानुषङ्गेणाऽष्टाकपालो वैश्वानरो भवतीति गुणविशिष्टयागान्तरविधानं विपरिणतानुषङ्गदोषादेव । अगत्या हि विपरिणतानुषङ्गः क्रियते । अस्ति चाऽर्थवादत्वेनैवाऽत्र गतिरिति वक्ष्यामः । तदुक्तम्—

वैश्वानरपदं नाऽपि यागायाऽत्राऽनुषज्यते ।

विभक्त्यन्तरयोगित्वान्न चर्त्तेऽस्मादनर्थकम् ॥ इति ॥

( तं. वा. १. ४. ११. पृ. ३५० )

नन्वेवं तर्हि प्रकृतं वैश्वानरयागमाश्रित्य यथासंख्यं पूतत्वादिफलेऽष्टत्वादयो विधीयन्ताम् । "गायत्रियैवैनं ब्रह्मवर्चसेन पुनाती" त्यस्याऽर्थवादत्वं भविष्यति । नैवम्; "वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते" इत्युपक्रम्याऽन्ते च "यद्द्वादशकपालो भवति यस्मिञ्जात एतामिष्टिं निर्वपती" त्युपक्रमोपसंहारयोर्द्वादशकपालकीर्त्तनाद्द्वादशकपालविधानपरमेकमिदं वाक्यमवगम्यते । तत्राऽपि यदि "गोदोहनेन पशुकामस्ये"तिवदष्टाकपालादौ कामनोपबन्धेन फलसम्बन्धः स्फुटतरमवगम्येत, तदा वाक्यभेदः स्वीक्रियेताऽपि । न चैवमस्ति । अतोऽत्र न गुणफलसम्बन्धः । किन्त्वेकवाक्यताबलादर्थवादत्वमेवेति ।

न च द्वादशकपालेऽष्टाकपालादेरभावस्योक्तत्वात्कथमर्थवादत्वमिति वाच्यम् । यतः स्तुतिर्भवन्ती न यथाभूतार्थकीर्त्तनेनैव भवति । सताऽसता वाऽर्थेन स्तुत्युपपत्तेः । तदत्रापि द्वादशकपाले संस्कृतपुरोडाशस्य महापरिमाणत्वादष्टाकपालादिसंस्कृतपुरोडाशसदृशो भागोऽस्तीति सादृश्यनिबन्धनेयं स्तुतिरित्यर्थवादत्वेनैवोपपत्तेर्न गुणविधानं, किन्त्वर्थवादत्वनैवेति ।

प्रयोजनम्—पूर्वपक्षेऽष्टाकपालादीनां द्वादशकपालेन सह

विकल्पेनाऽनुष्ठानम् । सिद्धान्ते तु नित्यं द्वादशकपाले-नैवेति ।

सूत्रन्तु—"गुणस्य तु विधानार्थे"अष्टाकपालादिवाक्यानां गुणविधिपरत्वे सति"तद्गुणा" यागप्रयोगे"अनर्थकाः" भवेयुः "न हि तं" यागप्रयोगं प्रति तेषां गुणानां "अर्थवत्ताऽस्ति" तस्य द्वाद-शत्वावरुद्धत्वादित्यर्थः ॥

इति द्वादशं वैश्वानराधिकरणम् ॥

अथ त्रयोदशं तत्सिद्ध्यधिकरणम् ॥

( तात्सिद्धिपेटिका )

## तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसम-वाया इति गुणाश्रयाः ॥

( विषयसंशयौ )

"यजमानः प्रस्तरः" ( मै.सं. ३. ८. ६.) "यजमान एककपाल" ( मै.सं. १.१.२०. ) इत्येवमादि समाम्नायते । तत्र सन्देहः—"यजमानः प्रस्तर" इति किमेष विधिः ? किमर्थवादः ? इति । तथा "यजमान एककपालः" इति ।

(प्रभाकरमतेन पूर्वोत्तरपक्षौ)

अत्र प्रभाकरेण संगतिलोभात्सर्वेष्वेवोदाहरणेष्वित्थमधिकरणमुपवर्णितम्। "यजमानः प्रस्तरः" इत्यादिषु न तावद्यजमानकार्ये प्रस्तरविधिः, चेतनकार्येऽचेतनस्याऽयोग्यत्वात्। नाऽपि प्रस्तरकार्ये यजमानविधिः, जुह्वादिपदार्थासादनावरुद्धे तस्मिन्सकलयजमानकार्यलोपप्रसङ्गात्। अतो नाऽयं गुणविधिः। नाऽप्यर्थवादः, यजमानशब्दस्य प्रस्तरे प्रस्तरशब्दस्य च यजमाने प्रवृत्तिनिमित्ताभावेन स्तुत्यसम्भवात्। न च गुणयोगः प्रवृत्तिनिमित्तम्, एतदधिकरणपूर्वपक्षे गौणशब्दप्रयोगाक्षेपात्। अतः प्रतिभामात्रहेतुत्वादेवमादेरप्रामाण्यमेवेति पूर्वपक्षः। सिद्धान्तस्तु यथाभाष्यमेवेति।

(प्रभाकरमतदूषणम्)

तदिदमनुपपन्नम्; वक्ष्यमाणपूर्वपक्षप्रकारेण गुणविधित्वेन प्रामाण्योपपत्तेरिति यत्किञ्चिदेतदिति यथावार्त्तिकमेवाऽधिकरणं प्रस्तूयते। पूर्वमर्थवादपादे स्तुत्यर्थं परत्र परशब्दप्रयोगस्य प्रवृत्तिनिमित्तमर्थवादप्रामाण्यप्रतिपादनपरतयाऽभिहितम्। इदानीं पूर्वाधिकरणोक्तगुणविधिप्रतियोगिकार्थवादप्रतिपादनप्रसङ्गेनाऽभिधीयते।

( भाट्टमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः । "यजमानः प्रस्तर" इति सामानाधिकरण्यं तावदत्र प्रतीयते । न चैतन्नामधेयत्वेनोपपद्यते, उद्भिदादिपदवत् प्रवृत्तिनिमित्ताभावात् । नाऽप्यर्थवादत्वेन, न हि प्रवृत्तिनिमित्तं विना परत्र परशब्दः स्तोतुं प्रयुज्यते । नाऽपि गुणयोगः प्रवृत्तिनिमित्तम्, यजमानशब्दस्य गुणानभिधायकत्वात् । न च गुणानभिधानेऽप्यग्निशब्दस्येव माणवके गौणत्वमिति वाच्यम् । सर्वगौणशब्दानामेव गौणत्वस्यैतदधिकरणव्युत्पाद्यत्वात् । अतः सामानाधिकरण्योपपत्तयेऽन्यतरस्य कार्यलक्षणापरत्वं वक्तव्यम् । तत्र "मुख्यं वा पूर्वचोदनाल्लोकव"दिति न्यायेन "यो होता सोऽध्वर्यु"रिति विधयजमानशब्दस्य मुख्यत्वादनुपजातविरोधित्वाच्च स्वार्थपरत्वम् , प्रस्तरशब्दस्य जघन्यत्वाद्विरोधाच्च कार्यलक्षणापरत्वम् । तथा सत्यर्थवत्त्वात् प्रवृत्तिविशेषकरत्वाच्च प्रस्तरशब्दलक्षितकार्ये यजमानो विधीयत एव, होतेवाऽध्वर्युकार्ये । न चैवं सति सकलयजमानकार्योच्छेदप्रसङ्गः, सदस्यादिप्रतिपुरुषद्वारेणैव यजमानकार्योपपत्तेरित्येवं प्राप्तेऽभिधीयते—

( भाट्टमतेन सिद्धान्तः )

भवेदेवं यदि प्रस्तरकार्ये यजमानविधिरुपपद्येत, न चाऽ-

सावुपपद्यते । सकलयजमानकर्मलोपप्रसङ्गात् । नाऽपि सदस्यादिप्रतिपुरुषद्वारेण यजमानकर्माविरोध इति वाच्यम् । "सूक्तवाकेन प्रस्तरं प्रहरति" "एककपालं सर्वहुतं करोति" इति प्रस्तरैककपालयोराहवनीयप्रक्षेपश्रुतेर्यजमानस्याऽऽहवनीयप्रक्षेपे सति यजमानकर्मलोपस्य तदवस्थत्वात् ।

किञ्च "यजमानः प्रस्तर" इत्यत्र न तावद्विधिः श्रूयते । न च "यो होता सोऽध्वर्यु" रित्यादिष्विव गत्यन्तरासम्भवेन कल्पयितुं शक्यते । "प्रस्तरमुत्तरं बर्हिषः सादयति" "एककपालं सर्वहुतं करोती" त्येतद्विधिशेषत्वेनाऽर्थवादत्वेनैव गतिसम्भवात् । एवञ्च सत्येकवाक्यत्वेनैवोपपत्तेर्वाक्यभेदोऽपि न भविष्यति । न च प्रवृत्तिनिमित्तं विना परशब्दः परत्र कथं प्रयुज्यत इति वाच्यम् । गुणयोगस्यैव प्रवृत्तिनिमित्तत्वात् ।

ननु गुणोऽपि न कश्चित्साधारणो यजमानशब्देनाऽभिधीयत इत्युक्तम् । सत्यं ; लक्षणया स्वाभिधेयार्थसम्बन्धोपस्थितमेवाऽर्थं शब्दो विषयीकरोति । यथा गङ्गाशब्दः स्वार्थसम्बद्धमेव तीरम् । गौणः पुनरभिधेयार्थसम्बन्धलक्षितगुणयोगेनैवाऽर्थान्तरम् । यथा— 'अग्निर्माणवक' इति । तदुक्तम्—

अभिधेयाविनाभूते प्रवृत्तिर्लक्षणोच्यते ।




लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥ इति ॥

( तं. वा. १. ४. १२. पृ. ३५४ )

गुणश्चाऽत्र यजमानप्रस्तरैककपालानां यागप्रयोगसिद्धिकरत्वमेव । अनेन गुणयोगेन प्रस्तरैककपालयोः स्तुतिरित्यर्थवादत्वमेवेति । तदुक्तं सूत्रे--"तत्सिद्धि"रिति ।

इति तत्सिध्यधिकरणम् ॥

अथ चतुर्दशं जात्यधिकरणम् ॥

तथा "आग्नेयो वै ब्राह्मणः" "ऐन्द्रो राजन्यः" "वैश्यो वैश्वदेवः" इत्यत्र तद्धितान्तस्याऽऽग्नेयादिपदस्य यथाकथञ्चिन्मुख्यभावेनाऽपि ब्राह्मणादिपदसामानाधिकरण्यसम्भवाद'ग्निर्ब्राह्मणः, इन्द्रो राजन्यः, वैश्यो विश्वेदेवाः' इत्येतदेवोदाहरणं, न तु तद्धितान्तपदानि । अत्राऽपि पूर्ववदेव लक्षितब्राह्मणकार्ये गुणविधानमिति पूर्वः पक्षः ।

सिद्धान्तस्तु--अग्नेरचेतनस्य ब्राह्मणादिकार्यकरणासम्भवादर्थवादत्वेन चोपपत्तेर्ब्राह्मणादिसम्बन्धिविध्येकवाक्यतया गुणवादेनाऽर्थवादत्वमेव । प्रवृत्तिनिमित्तञ्च गुणोऽग्निब्राह्मणयोरर्थवादा-

वगतैकब्रह्ममुखोत्पत्तिः । इन्द्रराजन्ययोर्ब्रह्मबाहुभ्यामुत्पत्तिः । विश्वेदेववैश्ययोर्ब्रह्ममध्यदेशादुत्पत्तिः । तदुक्तं सूत्रे—"जाति"रिति ॥

अथ पञ्चदशं सारूप्याधिकरणम् ॥

तथा "यजमानो यूपः" "आदित्यो यूपः" इत्यत्राऽप्युक्तन्यायेन न लक्षितकार्ये गुणविधिः, किन्तु यूपविध्येकवाक्यतया गुणवादेनाऽर्थवादत्वमेव । प्रवृत्तिनिमित्तञ्च गुणः यूपस्य यजमानेन सहोर्ध्वत्वम् । आदित्येन सह तेजस्वित्वमिति । तदुक्तं सूत्रे—"सारूप्यमि"ति ॥

अथ षोडशं प्रशंसाधिकरणम् ॥

तथा "अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः" "अयज्ञो वा एष योऽसामा" "असत्रं वा एतद्यदच्छन्दोममि"ति । अत्र पश्वादिशब्दलक्षितं कार्यं नञा निषिद्ध्यत इति पूर्वपक्षो मन्यते । तदयुक्तम्; पशुकार्यस्य निषेद्धुमशक्यत्वात् । द्विविधं हि तस्य कार्यं—प्रमाणान्तरसिद्धं दोहनादि वैधञ्च यागादि । तत्र प्रमाणान्तरसिद्धं तद्विरोधादेव न निषेध्यम् । नाऽपि वैधम्, आख्यातयोगिनञ्शब्दाश्रवणात् । आख्यातयोगे हि नञ्निषेधको भवति । न चाऽऽपशव इत्यत्राऽऽख्यातं श्रूयते, येन षोडशिग्रहणाग्रहणवद्विकल्पो भवेत् । तेन

गवाश्वविध्येकवाक्यतयाऽर्थवाद एवाऽयम् । तथा च सति "पशवो गोऽश्वा" इत्यत्र पशुशब्दः प्राशस्त्यं तद्गतं लक्षयित्वा प्राशस्त्यलक्षणगुणयोगेन गवाश्वसमानाधिकरणो भवति—"पशवो गोऽश्वा" इति । तादृशमेव च पशुशब्दं पश्वन्तरेषु सामानाधिकरण्येन तथैव प्राशस्त्यावगमहेतुं प्रयुज्य गवाश्वयोः प्रशस्ततरत्वज्ञापनार्थं नञा तदभावः प्रतिपाद्यते—"अपशवो वा अन्ये गोअश्वेभ्य" इति । अप्रशस्ता इत्यर्थः । तदुक्तम्—

गवाश्वादिगतां पूर्वमुपादाय प्रशस्तताम् ।
तदभावोऽन्यपश्वादौ नञ्समासेन कथ्यते ॥ इति ॥

( तं॰ वा १. ४. १२. पृ. ३६२. )

इदं त्विह विवेक्तव्यम्—द्विविधो हि गौणः शब्दो भवति । यत्र परशब्दः परत्र प्रयुज्यते, तत्र साधारणमेव गुणं निमित्तीकृत्य प्रवर्त्तते । यथा—'अग्निर्माणवक' इति । यत्र पुनः सामान्यवाची शब्दो विशेषशब्दसमानाधिकरणः प्रयुक्तः सन्ननर्थको भवति, तत्र तद्गतमेव गुणं लक्षयित्वा तत्सामानाधिकरण्यं प्रतिपद्यते । यथा—"वसिष्ठो ब्राह्मणः" इति । तद्वदिहाऽपि पशुशब्द इति । किञ्चाऽन्यत्र प्रशंसाफलं तत्सिद्ध्यादयो गुणाः प्रवृत्तिनिमित्तानि । इह तु

प्रशंसैव गुणः प्रवृत्तिनिमित्तमित्येतदपि विवेक्तव्यमिति । तदुक्तं सूत्रे—प्रशंसे''ति ।

अथ सप्तदशं भूमाधिकरणम् ॥

''सृष्टीरुपदधाती''ति विधिरनुवाद इति संदेहः । ''इष्टकाभिरग्निं चिनुत'' इत्यग्निस्थापनार्थेष्टकाचयनं प्रकृत्य श्रूयते—''सृष्टीरुपदधाती''ति। अत्र यद्यप्युपदधातीत्युपधाने विधिः श्रूयते, तथाऽपि तस्येष्टकारोपणरूपस्योपधानस्य चयनात्तेपलब्धत्वात्सृष्टिपदार्थसंक्रान्तो विधिः । सृष्टिपदेन च ''तद्वानासामुपधानो मन्त्र''इत्यनुशासनात्सृष्टिपदवन्मन्त्रोपधेया इष्टका उच्यन्ते । न तासां मन्त्रसम्बन्धात्प्राक् सृष्टिपदवाच्यत्वेन प्रसिद्धिरस्ति । ततश्च प्राप्ताप्राप्तविवेकेन विशेषणीभूतमन्त्रविधिरेवाऽयमिति पूर्व्वः पक्षः ।

सिद्धान्तस्तु—न चैतत्संभवति । तथा सतीष्टकोपधानमात्रोद्देशेन सृष्टिपदवन्मन्त्रविधाने लिङ्गप्रकरणविनियोज्यानां सृष्टिपदरहितानां मन्त्राणामानर्थक्यप्रसंगात् । न च गत्यन्तरं नाऽस्ति । बहवो हि मन्त्राः सृष्टिपदवन्त एव श्रूयन्ते । अन्येषामपि तदन्तर्गतत्वात्सृष्टिशब्देन सृष्टयसृष्टिपदवन्मंत्रोपधेयेष्टकानुवादेनाऽर्थवादत्वेनैवोपपत्तेः । दृश्यते चैवं लोकेऽपि ब्राह्मणभूयस्त्वेन ब्राह्मणाब्राह्मणग्रामस्य ब्राह्मणग्राम इति श्रुतिः ।

तदेतद्यथाभाष्यमधिकरणं वार्त्तिककारपादा नाऽनुमन्यन्ते। विध्येकदेशो ह्यर्थवादो भवति। न चाऽत्र विधिः कश्चित्सन्निहितोऽस्ति। प्रकृतचयनविधेरप्यनेकवाक्यान्तरव्यवहितत्वेनाऽस्य तदेकदेशत्वाभावात्। तेनोपधानमेवाऽत्र विधीयते। सृष्टिपदेन च सृष्टचसृष्टिपदवन्मन्त्रकेष्टकाप्रतिपादनं स्तुत्यर्थं प्रथनविधाविव "उरु प्रथा उरु प्रथस्वे" ति मन्त्रकीर्त्तनम्। न च चयनार्थाक्षिप्तमुपधानं न विधीयत इति वाच्यम्। आक्षेपात्प्रागेव शीघ्रप्रवृत्तेन प्रत्यक्षविधिना तद्विधानात्।

न च विनाऽपि विधिना प्रसिध्यतः किं विधिनेति वाच्यम्। यतो विधाने सत्याध्वर्यववेदविहितत्वेनाऽध्वर्युकर्तृकत्वनियमसिद्धेः। तदुक्तम्—

प्राप्नुवत्स्यपि वक्तव्या पुनरेवंविधा क्रिया।
आध्वर्यवसमाख्यानं तथा हि प्रतिपद्यते॥ इति॥

( तं. वा. १. ४. १२. पृ. ३६४ )

अन्यच्च विस्तरभिया नाऽभिहितम्। तदुक्तं सूत्रे—"भूमे"ति॥

अथाऽष्टादशं लिङ्गसमवायाधिकरणम्॥

तथा "प्राणभृत उपदधाति" "अज्यानीपदधाती"ति। अत्रा-

ऽपि पूर्ववदिष्टकाचयनमेव प्रकृत्य श्रूयते–"प्राणभृत उपदधाती"ति । तत्र किमयं विधिरुतार्थवाद इति संशय्यते ।

तत्र पूर्वपक्षी मन्यते—"सृष्टीरुपदधाती"त्यत्र सृष्टिपदवन्मन्त्राणां बहुत्वात्तन्मध्यवर्त्तिनामसृष्टिपदवतामपि भवतु स्तुत्यर्थमुपादानम्, इह त्वेकस्यैव मन्त्रस्य स्तुत्यर्थमुपादानमिति पूर्वोक्तेन पूर्वपक्षन्यायेन मन्त्ररूपगुणविधानमेवेति पूर्वपक्षः ।

सिद्धान्तस्तु पूर्ववदेव । तत्र लिङ्गप्रकरणविनियोज्यानां बहूनां मन्त्राणामानर्थक्यप्रसङ्गान्न गुणविधित्वं, किन्तु छत्रिन्यायेनैकदेशसम्बन्धिनापि लक्षितसमुदायगुणयोगेनैव समुदायिषु प्राणभृच्छब्दप्रवृत्त्युपपत्तेः पूर्ववदर्थवादत्वमेवेति । तदेतदपि वार्त्तिककारपादा नाऽनुमन्यन्ते । सन्निहितविध्यभावेनाऽर्थवादत्वाभावादेव । तेनाऽत्राऽप्युपधानमेव विधीयते । मन्त्रकीर्त्तनं प्रथनन्यायेनाऽर्थवादार्थमेवेति ।

इदन्त्विह वक्तव्यम् । "सृष्टीरुपदधाति" "प्राणभृत उपदधाती"त्युदाहरणद्वयेऽपि लक्षितसमुदायगुणयोगेन समुदायिप्रतीत्यविशेषान्न सृष्टिप्राणभृच्छब्दार्थयोर्भूयस्त्वाल्पत्वेन समुदायिषु प्रवृत्तिनिमित्ते कश्चिद्विशेषोऽस्तीति विचारद्वयमनर्थकमेवेति ।

अत्रोच्यते—गौणो हि शब्दः परत्र वर्त्तितुं यल्लक्षयति स

एव गुणास्तत्प्रवृत्तौ निमित्तम्। "स्तुष्टी"रिति च बहुत्वान्वयाद्धोपादेव समुदायोऽवगम्यते। एकदेशकालक्रियावच्छेदेन समुदायापन्नानामेव द्वित्वबहुत्वादिसंख्यायोगात्। अतोऽत्र नाऽर्थान्तरे वर्त्तितुं लक्षितः समुदायो निमित्तम्। किन्तु समुदायगतं स्तुष्टीनां बाहुल्यमेव। तच्च यथा केवलस्तुष्टिसमुदाये समस्ति, तथा स्तुष्टयस्तुष्टिसमुदायेऽपीति। तेन तत्पदवतामन्येषां च समुदायगतं बाहुल्यं लक्षितं समुदायान्तरे प्रवृत्तौ निमित्तमिति। बहुवचनश्चाऽत्र "स्तुष्टी"रिति समुदायस्यैकत्वेऽपि समुदायान्तर्गतस्तुष्टयस्तुष्टिसमुदायिबहुत्वापेक्षया। यथा दर्शपूर्णमासशब्दयोः समुदायिवचनत्वेऽपि तदन्तर्गतसमुदायद्वयापेक्षया "दर्शपूर्णमासाभ्यां यजेते"ति द्विवचनान्तत्वम्। "प्राणभृत उपदधाती"त्यत्र तु प्राणभृन्मन्त्रस्यैकत्वादेकस्मिन्बहुवचनानुपपत्त्या स्वसमवेतं समुदायं लक्षयति। स च समुदायः प्राणभृदप्राणभृत्समुदायिष्वविशिष्ट इति समुदायमेव निमित्तीकृत्य समुदायिषु प्रवर्तत इति प्रवृत्तिनिमित्तभेदादेवोदाहरणद्वयार्थवत्त्वमिति। अत्र च प्राणभृच्छब्दस्य समुदायद्वारेण समुदायिविषयत्वात्समुदायस्य च प्राणभृदप्राणभृत्साधारणत्वात्प्राणभृच्छब्दस्य गौणत्वेऽपि स्वार्थापरित्यागः। एवं स्तुष्टिपदस्यापि समुदायविषयत्वात्स्वार्थापरित्याग एव।

प्रयोजनम्—स्तुष्टिप्राणभृल्लिङ्गैरेवोपधानं कर्त्तव्यं यदि पूर्व-

पक्षः । यदि सिद्धान्तः सृष्टयसृष्टिप्राणभृन्मन्त्रैरिति । तत्सिध्यादिषु पक्षोक्तमेव प्रयोजनमूहनीयमिति । तदुक्तं सूत्रे--"लिङ्गसमवाया" इति । प्राणभृत्पदवन्मन्त्रलिङ्गसमवायात्समुदायिप्रतीतिरित्यर्थः ॥

इत्यष्टादशं लिङ्गसमवायाधिकरणम् ॥

( इति तत्सिद्धिपेटिका )

अथैकोनविंशं वाक्यशेषाधिकरणम् ॥

## संदिग्धेषु वाक्यशेषात् ॥

( विषयसंशयौ )

"अक्ताः शर्करा उपदधाति तेजो वै घृत"मिति श्रूयते । तत्र संदेहः– किं घृततैलवसानामन्यतमेन द्रव्येणाञ्जनीयाश्शर्करा उत घृतेनैवेति ।

( प्रभाकरमतेन पूर्वोत्तरपक्षौ )

अत्र प्रभाकरेण सङ्गतिलोभादित्थमधिकरणमुपवर्णितम् । "अक्ता" इत्युपक्रमेऽञ्जनाक्षेपाद्घृततैलवसानामन्यतमदञ्जनसाधनमवगम्यते । "तेजो वै घृत"मित्युपसंहारे घृतं स्तूयते । तत्रोपक्रमोपसंहारस्थयोः कतरद्बलीय इति विशेषानध्यवसायादप्रामाण्यमिति पूर्वः पक्षः । सिद्धान्तस्तु यथाभाष्यमेवेति ।

( प्रभाकरमतदूषणम् )

तदयुक्तम् ; वक्ष्यमाणपूर्वपक्षन्यायेन विद्ध्युद्देशबलीयस्त्वेनैवाऽध्यवसायादिति यथावार्त्तिकमेवाऽधिकरणं प्रस्तूयते । स्तुत्युपयोगमर्थवादस्याऽभिधायेदानीं प्रसङ्गात् सन्दिग्धनिर्णयोपयोगः प्रतिपाद्यते ।

( भाट्टमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणोऽभिसन्धिः । विद्ध्युद्देशे हि प्रथममञ्जनसाधनं घृततैलवसासाधारणं स्नेहद्रव्यमात्रमुपस्थितम् । न तदवसानस्थितजघन्यार्थवादानुरोधेन सङ्कोचमधिकुरुते । किन्तु बलवन्मुख्यानुरोधेनाऽर्थवाद एव तदनुगुणतया वर्णयितुमुचितः। शक्नोति च घृतपदं लक्षणया विद्ध्युद्देशावगतं स्नेहद्रव्यमात्रं स्तोतुम् । तदुक्तम्—

स्तुतीनां विध्यधीनत्वादनुवादाच्च लक्षणा ।
मुख्यत्वाच्च विधेर्नाऽसावविरोधाच्च कल्प्यते ॥ इति ॥

( तं. वा. १. ४. १३. पृ. ३६६ )

तेन बलवद्विध्यनुरोधेन तैलघृतवसानां विकल्प एवेत्येवं प्राप्तेऽभिधीयते—

( भाट्टमतेन सिद्धान्तः )

भवेदेवं यदि घृतस्तुतिदर्शने सति विध्युद्देशगतमञ्जनपदं

द्रव्यान्तरमञ्जनसाधनं कल्पयितुमुत्सहते । तथा हि—सर्वेष्वेव 'गामानय शुक्ला'मित्यादिवाक्येषूपक्रमावगतसामान्यशब्दस्याऽवसानगतविशेषशब्दवशादेवाऽर्थविशेषनिर्णयो भवति । उक्तञ्चाऽर्थवादानां विधिवाक्यशेषत्वम् । तेन यद्यप्यक्तपदमुपक्रमेऽञ्जनसाधनद्रव्यमात्रवचनं, तथाऽपि तद्विशेषाक्षेपदशायां घृतस्तुतिदर्शनाद्विधिस्तुत्योश्च समानविषयत्वनियमाद्घृतमेव निर्णीयते । तदुक्तम्—

विधिस्तुत्योः सदा वृत्तिः समानविषयेष्यते ।
तस्मादेकत्र सन्दिग्धमितरत्राऽवधार्यते ॥ इति ॥

( तं. वा. १. ४. १३ पृ. ३६७ )

किञ्च शब्दभावना हि विधिस्तस्य चाऽङ्गं विधेयस्तुतिरूपा प्ररोचना । इह च तैलाद्युपादानपक्षे विधेरेव तत्र प्ररोचनाशक्तिः कल्पनीया । क्लृप्ता च घृते प्ररोचना समस्ति । तथा च सत्येकत्र क्लृप्तां गृह्णन्नितरत्र कल्पयन्विधिर्वैरूप्येण भिद्येत । तेन यत्रैव प्ररोचना स एव विधीयत इति निर्णयो भवति । तदुक्तम्—

समाप्यते विधिः कश्चित्कदाचिन्नाऽप्ररोचनः ।
घृते प्ररोचनां दृष्ट्वा विधिस्तत्राऽनुमीयते ॥ इति ॥

( तं वा. १-४. १३. पृ. ३६७ )

किञ्चा "अक्ताः शर्करा उपदधाती" ति नाऽत्र विधिः श्रूयते । किन्त्वर्थवादवशादुन्नेतव्यः । अतोऽपि घृतविषयार्थवाददर्शनाद्घृतमेव विधीयते । न च "छागो वा मन्त्रवर्णादि"त्यस्य षष्ठान्त्याधिकरणस्याऽनेन पुनरुक्तत्वम् । मन्त्रस्य भिन्नवाक्यत्वेन पूर्वपक्षोत्थानोपपत्तेः । न च तेनैवाऽस्य दण्डापूपीयितत्वम् । अनुष्ठेयार्थप्रतिपादकत्वस्य विनिगमनहेतोरभावेनाऽत्र पूर्वपक्षोपपत्तेः ।

प्रयोजनम्–पूर्वपक्षे स्नेहद्रव्यानियमः । सिद्धान्ते घृतमेवेति ।

सूत्रन्तु–एकवाक्यत्वे सत्युपक्रमोपसंहारस्थयोः सामान्यविशेषशब्दयोः कस्य किमधीना प्रवृत्तिरिति सन्देहे उक्तप्रकारेण वाक्यशेषादेवोपक्रमस्थशब्दार्थनिर्णय इति ॥

इत्येकोनविंशं वाक्यशेषाधिकरणम् ॥

अथ विंशं सामर्थ्याधिकरणम् ॥

## अर्थाद्वा कल्पनैकदेशत्वात् ॥

( विषयसंशयौ )

"स्रुवेणाऽवद्यति स्वधितिनाऽवद्यति हस्तेनाऽवद्यती"ति श्रूयते । तत्र सन्देहः । किं सर्वस्य स्रुवेणाऽवदातव्यं द्रवस्य मांसस्य

संहतस्य च, तथा स्वधितिना हस्तेन च सर्व्वेषाम् ? अथाऽर्थतो व्यवस्था-द्रवाणां स्रुवेण, मांसानां स्वधितेना, संहतानां हस्तेनेति ।

( प्रभाकरमतेन पूर्वोत्तरपक्षौ )

अत्र प्रभाकरेण सङ्गतिलोभादित्थमधिकरणमुपवर्णितम् । अत्र स्रुवस्वधितिहस्तानामविशेषेणाऽवदानसाधनत्वं शास्त्रादवगम्यते । अवदेयानि च द्रवमांससंहतानि । न च तानि सर्वाण्यविशेषेण स्रुवादिभिरवदातुं शक्यत इति शब्दवस्तुविसंवादेनाऽनद्ध्यवसायाद-प्रामाण्यमिति पूर्वः पक्षः । सिद्धान्तस्तु यथाभाष्यं सामर्थ्यानु-सारेणैवेति ।

( प्रभाकरमतदूषणम् )

तदनुपपन्नम् ; वक्ष्यमाणपूर्वपक्षन्यायेनाऽव्यवस्थयैवाऽद्ध्य-वसायोपपत्तेर्यत्किञ्चिदेतदिति यथावार्त्तिकमेवाऽधिकरणं प्रस्तुमहे । अर्थवादस्य सन्देहनिर्णायकत्वं प्रतिपाद्येदानीं प्रसङ्गेन सामर्थ्य-स्याऽपि सन्दिग्धनिर्णायकत्वं प्रतिपाद्यते ।

( भाट्टमतेन पूर्वपक्षः )

अत्राऽयं पूर्वपक्षिणो ऽभिसन्धिः । अविशेषेण स्रुवादीनामव-

दानसाधनत्वं शब्दावगतम् । न च स्रुवादीनां मांसाद्यवदानसामर्थ्याभावात्तन्न संभवतीति वाच्यम् । शब्दबलेनैवाऽन्यार्थसहभावेनाऽपि सामर्थ्यमापाद्य साधनत्वसंभवादव्यवस्थैव सर्वैः सर्वमवदातव्यमित्येवं प्राप्तेऽभिधीयते—

( भाट्टमतेन सिद्धान्तः )

भवेदेवं यदि सामर्थ्यमत्र व्यवस्थाकारणं न भवेत् । सर्वत्र खलु विधिर्विधेयसामर्थ्यमपेक्ष्य प्रवर्त्तते । असमर्थस्य विधिशतेनाऽपि विधातुमशक्यत्वात् । यद्यत्र प्राक्प्रसिद्धं सामर्थ्यं व्यवस्थाकारणं नाऽस्ति, तत्र विधिबलेनैव प्रकारान्तरेणाऽपि सामर्थ्यमापाद्य विनियोगः क्रियेतैव । यत्र पुनः पूर्वप्रसिद्धमेव सामर्थ्यमस्ति, तत्र तद्वशेनैव व्यवस्थोपपत्तेस्तदनुकूलयैव विद्ध्येकदेशः कल्प्यते । तदुक्तम्—

अथ यत्रेति सन्दिग्धे वाक्यशेषो न विद्यते ।
तत्र सामर्थ्यसिद्धेन विद्ध्यंशेनैव निर्णयः ॥ इति ॥

( तं. वा. १. ४. १४ पृ. ३५८ )

तस्मात्सामर्थ्यकल्पितैकदेशमेवंरूपमेवतद्वाक्यत्रयम्—स्रुवेणावद्यति द्रवाणां, स्वधितिनाऽवद्यति मांसानां, हस्तेनाऽवद्यति संह-

-तानाम् । तदुक्तम्—

यथैव पाठः प्रतिपत्त्युपायस्तथैव सामर्थ्यमपि श्रुतीनाम् ।
तेनैव चैता न समामनन्ति सहस्रभागन्तु समामनेयुः ॥

( तं. वा. १. ४. १४. पृ. ३६९ )

प्रयोजनम्-पूर्वपक्षे सर्वैः सर्वमवदातव्यम् । सिद्धान्ते तु यथोक्तव्यवस्थयैवेति ।

सूत्रन्तु—"अर्थात्" सामर्थ्याद्व्यवस्थाकल्पना । सामर्थ्यस्याऽपि शब्दैकदेशकल्पनानिमित्तत्वेन श्रुतशब्दैकदेशत्वदिति ॥

ये नाम कश्चिदिह संविदितं प्रमेयं
ग्रन्थान्तरे लिखति वा वदति स्वयं वा ।
मत्कर्त्तृतामननुकीर्त्य स कीर्त्तिलोपा-
न्निस्सन्ततिर्जगति जन्मशतानि भूयात् ॥

इति विंशं सामर्थ्याधिकरणम् ॥

इति बालवलभीभुजङ्गापरनाम्नो महोपाध्यायश्रीभवदेवस्य कृतौ तौतातितमततिलके नामधेयपादः समाप्तः ॥

समाप्तश्चायं प्रथमोऽध्यायः ॥

## THE PRINCESS OF WALES' SARASVATI BHAVANA TEXTS

Edited by

Dr. MANGALDEVA SHASTRI M. A., D. PHIL. ( OXON ),

**Principal, Sanskrit College, Benares.**

( Nos. 1-68 and 73 edited by M. M. Pt. Gopinath Kaviraj, M A. )

No. 1—The Kiraṇāvali Bhāskara, ( किरणावलीभास्कर ) [वैशेषिक], a Commentary on Udayana's Kiraṇāvalī Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopinath Kaviraj.M.A
Rs. 1-12.

No 2—The Advaita Chintāmaṇi, ( अद्वैतचिन्तामणि ) [वेदान्त], by Rañgoji Bhaṭṭa,
Ed. with Introduction etc., by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-12

No 3—The Vedānta Kalpalatikā, (वेदान्तकल्पलतिका) [वेदान्त], by Madhusūdana Sarasvatī
Edited with Introduction etc., by Rāmājñā Pāṇḍeya Vyākaraṇāchārya. Rs. 1-12

No. 4—The Kusumāñjali Bodhanī, ( कुसुमाञ्जलिबोधनी ) [ न्याय ], a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja
Ed. with Introduction etc., by Gopīnath Kaviraj, M. A. 2-0

No. 5—The Rasasāra ( रससार ) [ वैशेषिक ], a Commentary on Udayana's Kiraṇāvalī, Guṇa section, by Bhaṭṭa Vādīndra
Ed. with Introduction etc., by Gopīnath Kaviraj, M. A. 1-2

No. 6—(Part I)-The Bhāvanā Viveka ( भावनाविवेक ) [मीमांसा], by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc., by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0-12

No. 6—(Part II)—Ditto Ditto Rs. 0-12

No. 7—(Part I)—The Yoginīhṛdaya dīpikā, (योगिनीहृदयदीपिका) [तन्त्र], by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra. Ed. with Introduction etc., by Gopīnath Kaviraj, M. A. Rs. 1-8

No 7—( Part II ) Ditto Ditto Rs. 1-4

No. 8—The Kāvyaḍākinī ( काव्यडाकिनी) [काव्यशास्त्र], by Gaṅgānanda Kavīndra.
Ed. with Introduction etc., by Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-10

No. 9—(Part I)-The Bhakti Chandrikā ( भक्तिचान्द्रका ) [भक्ति], a Commentary on S'āṇḍilya's Bhaktisūtrās, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs. 0-15

NO. 9—( Part II ) Ditto Ditto Rs. 1-8

No. 10-(Part I)-The Siddhāntaratna, (सिद्धान्तरत्न) [गौडीयवैष्णवदर्शन], by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 1-2

No. 10-(Part II)—Do Do Rs. 2-12

No. 11-The S'rī Vidyā Ratna Sūtras, (श्रीविद्यारत्नसूत्र) [तन्त्र], by Gauḍapāda, with a Commentary by S'ankarāraṇya.
Ed. with Introduction etc., by Nārāyaṇa S'āstrī Khiste, Sāhityāchārya. Rs. 0-9

No. 12–The Rasapradīpa (रसप्रदीप) [अलङ्कार], by Prabhākara Bhaṭṭa. Ed. with Introduction etc., by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1–2

No. 13–The Siddhasiddhānta Saṅgraha. (सिद्धसिद्धान्तसंग्रह) [नाथमार्ग] by Balabhadra.

Ed. with Introduction by Gopinath Kaviraj. M.A. Rs 0–14

No. 14–The Triveṇikā, ( त्रिवेणिका ) [अलङ्कार ], by Āśādhara Bhaṭṭa. Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0–14

No. 15–(Part I)–The Tripurārahasya ( Jñāna Khaṇḍa ) (त्रिपुरारहस्य, ज्ञानखण्ड ) [ तान्त्रिकदर्शन ],

Ed. with a prefatory Note by Gopinātha Kaviraj, M. A. Rs 0–14

No. 15–( Part II )—Do. Do. Rs 2–4

No. 15–( Part III )—Do. Do. Rs. 2–0

No. 15–( part IV )—Do. with Introduction etc., by Gopinath Kaviraj M. A., Rs. 1–8

No, 16–The Kāvya Vilāsa, ( काव्यविलास ) [ अलङ्कार ], by Chiranjīva Bhaṭṭāchārya.

Ed. with Introduction etc., by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 1–2

No. 17–The Nyāya Kalikā, (न्यायकलिका) [न्याय], by Bhaṭṭa Jayanta. Ed. with Introduction by M. M. Gaṅgānātha Jhā. M. A. D. Litt. Rs. 0–14

No. 18–(Part I)–The Gorakśa Siddhānta Saṅgraha , ( गोरक्षसिद्धान्तसंग्रह ) [ नाथमार्ग ],

Ed. with a Prefatory Note by Gopinath Kaviraj, M. A., Rs. 0–14

No. 19–( Part I )–The Prākṛita Prakāśa (प्राकृतप्रकाश) [प्राकृतव्याकरण] by Vararuchi with the Prākṛta Sañjīvanī by Vasantarāja and the Subodhinī by Sadānanda. Ed. with a Prefatory note etc., by Batuk Nath S'arma, M. A. and Baladeva Upādhyāya. M. A. Rs. 2–4

No. 19–( Part II ) Ditto Ditto Rs. 2–12

No. 19–( Part. III ) Introduction etc., ( In Preparation. )

No. 20–The Māṃsatattvaviveka ( मांसतत्त्वविवेक ) [ धर्मशास्त्र ], by Viśvanātha Nyāyapanchānana Bhaṭṭāchārya. Edited with Introduction etc., by Pandit Jagannātha Sāstri Hoshing Sāhityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M.A., Principal, Government Sanskrit College, Benares. Rs. 0–12

No. 21–( Part I ) The Nyāya Siddhānta Mālā ( न्यायसिद्धान्तमाला ) [ न्याय ] by Jayarāma Nyāya Panchānana Bhaṭṭāchārya. Edited with Introduction etc., by Dr. Mangal Deva Sāstrī, M.A., D. Phil. (Oxon) Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares. Rs. 1–2

No. 21–( Part II ) Ditto Ditto Rs. 2–0

No. 22–The Dharmānubandhi S'lokachaturdaśī ( धर्मानुबन्धिश्लोकचतुर्दशी ) [धर्मशास्त्र], by S'ri Seṣa Kṛṣna with a Commentary by Rāma Pandit. Edited with Introduction etc., by Nārāyana S'āstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares. Rs. 1–0

No. 23–The Navarātrapradīpa ( नवरात्रप्रदीप ) [ धर्मशास्त्र ], by Nanda Pandit Dharmādhikārī.

Ed. with Introduction etc., by Vaijānātha S'āstrī Varakale Dharmaśāstra-S'āstrī, Sādholāl Research Scholar, Sanskrit College, Benares, with a Foreword by Pandit Gopinath Kaviraj, M. A., Principal, Government Sanskrit College, Benares. Rs. 2–0

No. 24–The S'rī Rāmatāpinīyopaniṣad (रामतापिनियोपनिषद् [उपनिषद्], with the Commentary called Rāma Kāśikā in Pūrvatāpinī and Ānandanidhi in Uttaratāpinī by Ānandavana.
Ed. with Introduction etc., by Anantarama S'astrī Vetāla Sāhityopādhyāya, Post-Āchārya Scholar, Govt. Sanskrit College, Benares, with a Foreword by Pandit Gopī Nātha Kavirāja M. A., Principal, Government Sanskrit College Benares. Rs. 3–12

No. 25–The Sāpiṇḍyakalpalatikā ( सापिण्ड्यकल्पलतिका ) [ धर्मशास्त्र ], by Sadāśivadeva alias Āpadeva with a commentary by Nārāyana Deva

Edited with Introduction etc., by Jagannāth S'āstrī Hośiṅga Sāhityopādhyāya, Sādholāl Research Scholar, Govt. Sanskrit College, Benares. Rs. 1–4

No. 26–The Mṛgāṅkalekhā Nāṭikā ( मृगाङ्कलेखानाटिका ) [ नाटिका ], by Viśvanātha Deva Kavi.
Edited with Introduction etc., by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Asst. Librarian, Government Sanskrit Library, Benares. Rs. 1–0

No. 27–The Vidvachcharita Pāñchakam ( विद्वच्चरितपञ्चकम् ) [निबन्ध] By Nārāyana S'āstri Khiste, Sāhityachārya, Assistant Librarian, Govt. Sanskrit College, Sarasvati Bhavana Library, Benares. With an Introduction by Gopinātha Kaviraja, M. A., Principal, Govt. Sanskrit College, Benares. Rs. 2–0

No. 28--The Vrata Kos'a (व्रतकोश) [धर्मशास्त्र], by Jagannātha S'āstri Hoshiṅga Sāhityopādhyāya, late Sadholal Research Scholar, Sans. College, Benares. With a Foreword by S'ri Gopināth Kaviraj, M. A., Principal, Govt. Sanskrit College, Benares. Rs. 4–0

No. 29–The Vṛitti dīpikā (वृत्तिदीपिका)[व्याकरण], By Mauni S'rī Kṛṣṇa Bhaṭṭa.
Edited with Introduction etc., by Pt. Gangādhara S'astri Bhāradvāja, Prof. Govt. Sanskrit College, Benares. Rs. 1–2

No. 30--The Padārtha Maṇḍanam ( पदार्थमण्डन ) [ वैशेषिक ], By S'rī Veṇīdatta.
Edited with Introduction etc., by Pandit Gopāla S'āstri Nene, Professor, Govt. Sanskrit College, Benares. Rs. 0–14

No. 31–( Part I)–The Tantraratna ( तन्त्ररत्न ) [ मीमांसा ], by Pârtha Sārathi Mis'ra.
Edited by M. M. Dr. Ganganatha Jha, M. A., D. Litt., Vice-Chancellor, Allahabad University Allahabad. Rs. 1–14

No. 31–( Part II ) Ditto Ditto.
Edited by Pt. Gopāl S'āstri Nene, Govt. Sanskrit College, Benares. Rs. 2–4

No. 32–The Tattvasāra ( तत्वसार ) [ न्याय ], by Rākhāladāsa Nyāyaratna.
Edited with Introduction etc., by Harihara S'astri, Hindu University Benares. Rs 1–0.

No. 33–( Part I ) The Nyāya Kaustubha [Pratyaksha] (न्यायकौस्तुभ) [ न्याय ], by Mahadeva Puntamkar.
Edited with Introduction etc., by Umes'a Miśra, M. A., Allahabad University, Allahabad. Rs. 3–4

No. 34–( Part I ) The Advaita Vidyātilakam ( अद्वैतविद्यातिलकम् ) [ शाङ्करवेदान्त ], by S'rī Samarpuṅgava Dīkṣita. With a Commentary by S'rī Dharmayya Dīkṣita. Edited with Introduction, etc., by Ganapati Lal Jha, M. A., Sadholal Research Scholar, Govt. Sanskrit Library, Benares. Rs. 1–4

No. 35–The Dharma Vijaya Nāṭaka ( धर्मविजयनाटक ) [ नाटक ], by Bhūdeva S'ukla.
Edited with Introduction etc., by Pandit Nārāyaṇa S'āstri Khiste, Asst. Librarion, Govt. Sanskrit Library, Benares. Rs. 1–4

No. 36–The Ānanda Kanda Chompū ( आनन्दकन्दचम्पू ) [ चम्पू ], by Mitra Miśra,
Edited, with a Foreword by Gopinath Kaviraj, M. A, by Nanda Kishore Sāhityāchārya, Research Scholar, Sanskrit College, Benares. Rs. 3–8

No. 37–The Upanidāna Sūtra ( उपनिदानसूत्रम् ) [ वेद ],
Edited with Introduction by Dr. Mangaldeva S'āstri, M. A., D. Phil. Rs. 1–0

NO. 38–The Kiraṇāvali prakāśa dīdhitī ( Guṇa ), ( किरणावलीप्रकाश-दीधिति ) [ वैशेषिक ], by Raghunāth S'iromani.
Edited by Pandit Badrināth Sāstri, M. A., Lucknow University. Rs. 1–12

No. 39–The Rāma Vijaya Mahākāvya, ( रामविजयमहाकाव्य ) [काव्य] by Rupanātha.
Edited by Pt. Ganapatilal Jha, M. A. Rs. 2–0

No. 40–(Part I) The Kālatattva Vivechana(कालतत्त्वविवेचन) [धर्मशास्त्र] by Raghunātha Bhaṭṭa.
Edited with a Foreword by Gopinātha Kaviraja M. A. by Nanda Kishore S'orma Sāhityāchārya, Research Scholar, Sanskrit College, Benares. Rs.4–0

No. 40-( Part II ) Do Do Rs. 3-8

No. 41-( Part I ) The Siddhānta Sārvabhauma ( सिद्धान्तसार्वभौम ) [ ज्योतिष ], by S'rī Munīśvara.
Edited with Introduction etc., by Jyautiṣâchārya Pandit Murlidhara Thakkura, late Sadholal Scholar. Sanskrit College, Benares. Rs. 3-0

No. 41-( Part II ) Do. Do. Rs. 2-0

No. 42-The Bheda Siddhi ( भेदसिद्धि ) [ न्याय ], by Viśvanātha Pañchânana Bhaṭṭâchārya.
Edited with notes etc., by Nyāya Vyākaraṇāchārya Pandit Sûrya Nārāyaṇa S'ukla, Professor, Govt. Sanskrit College, Benares. Rs. 1-12

No. 43-( Part I ) The Smārtollāsa ( स्मार्त्तोल्लास ) [ कर्मकाण्ड ], by S'iva Prasāda.
Edited with Introduction, notes, etc., by Vedāchārya Pandit Bhagavat Prasād Miśra, Professor, Govt. Sanskrit College, Benarea. Rs. 1-8

No. 43-( Part II ) Do. Do. Rs. 2-12

No. 43-( Part III ) Do. Do. Rs. 0-12

No. 44-( Part I ) S'ūdrāchāra S'iromaṇi (शूद्राचारशिरोमणि) [धर्मशास्त्र]
Edited by Sāhityāchārya Pandit Nārayan S'astri Khiste. Rs. 2-4

No. 44-( Port II ) Do. Do. Rs. 0-12

No. 45-( Port I ) Kiraṇāvali Prakāśa (Guṇa) ( किरणावली प्रकाश-गुण) [ वैशेषिक ], by Vardhamāna.
Edited, with a Foreword by Pt. Gopinath Kaviraj M. A, by Pandit Badrinath S'astri, M. A., Lucknow University. Rs. 1-8

No. 45-( Port II ) Do. Do. Rs. 1-8

No. 46-( Part I ) Kāvya prakāśa dīpikā (काव्यप्रकाशदीपिका) [अलङ्कार] by S'ri Chaṇḍī Dāsa.

Edited by S'ivaprasāda Bhaṭṭāchārya, M. A., Professor, Presidency College, Calcutta. Rs. 1-12

No. 47-Bhedajayaśrī ( भेदजयश्री ) [ माध्ववेदान्त ], by S'rī Tarkavāgīśa Bhaṭṭa Veṇīdattāchārya.

Edited with Introduction etc., by Pandit Tribhuvan Prasad Upādhyāya, M. A., Inspector of Sasnkrit Pāṭhashalas, United Province, Benares. Rs. 1-4

No. 48-Samyak Sambuddha bhāṣitam Buddhapratimālakṣaṇam ( सम्यक्संबुद्धभाषितं प्रतिमालक्षणम् ) [ शिल्पशास्त्रम् ], With the Commentary Sambuddhabhāṣita pratimā lakṣaṇa Vivaraṇī.Critically edited with Introduction etc.,by Haridas Mitra, M. A. Viśvabhārati, S'āntiniketana. Rs. 1-4

No. 49-Bhedaratnam ( भेदरत्नम् ) [ न्याय ] by S'ankara Miśra, Edited with Introduction etc., by Pandit Sūryanārāyaṇa S'ukla, Professor, Govt. Sanskrit College, Benares. Rs. 1-8

No. 50-Mātrikā Chakra Viveka ( मातृकाचक्रविवेक ) [ तन्त्र ], by Svatantrānanda Nātha, with a Commentary.

Edited by Pandit Lalita Prasad Dabral Vyākarnāchārya. With a Foreword by Pt. Gopīnāth Kaviraj. M.A., Principal Govt. Sanskrit College. Benares. Rs. 2-0

No.51-52(a)Advaita Siddhānta Vidyotana(अद्वैतसिद्धान्तविद्योतन)[वेदान्त] by Brahmānanda Sarasvati, and

(b) Nṛisimha Vijnāpana (नृसिंहविज्ञापन)[वेदान्त],by Nṛisimhāśrama Edited with notes, Introduction etc., by Sūrya Nārāyaṇa S'ukla, Professor, Govt. Sanskit College, Benares Rs. 1-12

No. 53-Nṛsimha Prasāda-Vyavahārasāra ( नृसिंहप्रसाद-व्यवहारसार ) [ धर्मशास्त्र ], by Dalapati Rāja.

Edited with Introduction etc., by Pandit Vināyaka S'āstri Tillu, Research Scholar, Sanskrit College, Benares. Rs. 4-0

No. 54–Nṛsimha Prasāda–Prāyaśchitta Sāra (नृसिंहप्रसाद प्रायश्चित्तसार) [ धर्मशास्त्र ], by Sri Dalapati Rāja.
Edited by Pandit Nand Kishor Sharma and Nand Kumar Sharma Sahityacharya. Rs. 3–4

No. 55–NṛsimhaPrasâda–S'rāddha Sāra (नृसिंहप्रसाद श्राद्धसार) [धर्मशास्त्र]
Edited by Pandit Vidyadhara Miśra, College of Oriental Lerning, Benares Hindu University, Benares. Rs. 2–0

No. 56–Bhagavannāma Mahātmya Saṃgraha (भगवन्नाममाहात्म्यसंग्रह) [भक्तिशास्त्र], by Raghunāthendra yati, with Com. by Ananta S'āstri Phadke.
Edited by Pt. Ananta S'āstri Phadake. Rs. 2–12

No. 57–( Part I ) Gaṇita Kaumudī ( गणितकौमुदी ) [ गणित ], by Nārāyaṇa Paṇdit.
Edited by Pt. Padmākar Dvivedi. Professor, Govt Sanskrit College, Benares Rs. 1–10

No. 58–Khyātivāda ( ख्यातिवाद ) [ वेदान्त ], by S'aṅkara Chaitanya Bhāratī.
Edited by S'aṅkara Chaitnya Bhāratī, with a Foreword by M. M. Gopinath Kaviraj. M. A., Rs. 1–4

No. 59–Sāṇkhya tattvāloka ( सांख्यतत्त्वालोक ) [ सांख्य ], by Hariharānanda
Edited with Introduction by Jnaneswar Ghosh. M. A. with a foreword by M. M. Pt Gopinath Kaviraj. M. A. Rs. 1–6

No. 60–( Part I ) S'aṇḍilya Saṃhitā ( शाण्डिल्यसंहिता ) [ पाञ्चरात्र ],
Edited by Pt. Ananta Gopal Phadke. Professor, Govt. Sanskrit College, Benares. Rs. 1–8

No. 60–( Part II ) Ditto. Ditto. Rs. 2–12

No. 61.–Dakṣiṇāmūrti Saṃhitā ( दक्षिणामूर्तिसंहिता ) [ तन्त्र ],
Edited by Pt. Nārāyana S'āstri Khiste. Rs. 1–10

No. 62–Nṛsimha Prasāda—Tīrtha Sāra ( नृसिंहप्रसादः—तीर्थसारः ) [ धर्मशास्त्र ],
Edited by Pt. S'urya Nārāyaṇa S'ukla. Rs. 1-8

No. 63–Bhaktyadhikaraṇa mālā ( भक्त्यधिकरणमाला ) [ भक्तिशास्त्र ] by Nārāyaṇa Tīrtha.
Edited by Pt. Ananta S'āstri Phadake. Rs. 1-4

No. 64–Vāsiṣṭha Darśanam ( वासिष्ठदर्शनम् ) [ वेदान्त ], Compiled and Edited by Dr. B. L. Atreya, M. A., D. Litt. Lecturer, Benares Hindu University. Rs. 5-0

No. 65-67—

( a ) Tīrthendu S'ekhara ( तीर्थेन्दुशेखरः ) [ धर्म्मशास्त्र ], by Nāge'sa Bhaṭṭa.

( b ) Tristhalī Setu ( त्रिस्थलीसेतुः ) [ धर्मशास्त्र ], by Bhaṭṭoji Dīkṣita.

( c ) Kāśī Mokṣavichāra ( काशीमोक्षविचारः ) [धर्म्मशास्त्र], by Sureśvara Āchārya
Edited with Introduction by Pt. Surya Narayan S'ukla, Prof. Govt. Sanskrit College, Benares. Rs. 1-8

No. 68–Madhva Mukhālaṅkāra ( मध्वमुखालङ्कारः ) [ माध्ववेदान्त ], by Vanamāli Mis'ra.
Edited with Introduction by Pt Narasiṃhacharya Varakhedkar. with a Foreword by M. M. Pt. Gopinath Kaviraj M. A. Rs. 1-8

No. 69-( Part I ) Sankshepa Sārirakam ( संक्षेपशारीरकम् ) [ वेदान्त ] by S'rī Sarvajñātma Muni, with the commentary Tattvabodhīni by Nṛsimhāśrama.
Edited by Pandit Sūryanārāyaṇa S'ukla, Professar, Govt. Sanskrit College, Benares. Rs. 1-12

No. 69-( Pert II ) Ditto. Ditto. Rs. 1-8

No. 69–( Part III ) Ditto. Ditto. Rs. 1–8

No. 70–( Part I ) Bhāskari ( भास्करि ) [ शैवदर्शन ] a commentary on the Iśvara Pratyabhijñā, Kārikā of Utpala with the Vimarśini of Abhinava Gupta and commentary on Vimarśinī by Bhāskara Kantha.
Edited by K. Subrahmania Iyer, M. A., and Dr. K. C. Pandeya M. A., Ph. D. Rs. 6–0

No. 72–(a) Bhaktinirṇaya ( भक्तिनिर्णय ) [भक्ति] by Ananta Deva and (b) Nāma Māhātmya ( नाममाहात्म्य ) [ माहात्म्य ] by Aśrama Swāmi.
Edited by Pandit Ananta S'āstri Phadke. Benares. Rs.0–10

No. 73–Upendra Vijñāna Sūtra ( उपेन्द्रविज्ञानसूत्रम् ) [ वेदान्त ] by Upendra Dutta, with a commentary.
Critically edited with an Introduction, Indices by Dr. M. D. Shastri, M. A. D. Phil. ( Oxon ) Rs. 1–0

No. 74–( Part I ) As'valāyana S'rauta Sūtra with Sidhhānti Bhāshya ( सिद्धान्तिभाष्यसहित आश्वलायनश्रौतसूत्र ) [ वेद ],
Critically edited by Dr. M. D. S'āstri, M., A. D. Phil. (Oxon) Rs. 1–1

No. 75–Dvaita Nirṇaya Siddānta Sangraha ( द्वैतनिर्णयसिद्धान्तसंग्रहः ) [ धर्म्मशास्त्र ], by Pandit Bhanu Bhaṭṭa Mimānsaka.
Edited by Pandit Sūrya Nārāyaṇa S'ūkla Rs. 1–0

No. 76–Manonurañjana Nātaka by Ananta Deva Ed. by Ananta S'āstrī Phadke.

No. 77–Subhadrā-pariṇaya Nātaka by Rāmadeva. Ed. by Narayan Sastri Khiste. Rs. 0–10

---

## Works in the press.

No. 1. Nīti mañjarī (नीतिमञ्जरी) [वेद], by Dyā Dvivedī.
Edited by Dr. Mangal deva Sastri. M. A., D. Phil.

No. 2. Nyāya Kaustubha ( Part II ) Anumānakhaṇḍa (न्यायकौस्तुभ-अनुमानखण्ड) [न्याय], by Mahādeva Puntamkar.
Edited by Pt. Goswami Dāmodara S'āstri.

No. 3. Mīmānsā Chandrikā ( मीमांसाचन्द्रिका ) [ मीमांसा ], by Brahmānanda Sarsvati.
Edited by Pt. Hāran Chandra Bhaṭṭāchārya S'āstri.

No. 4. Tantraratna ( Part III ) ( तन्त्ररत्न ) [ मीमांसा ], by Pārtha Sārathi Miśra.
Edited by Pt. Gopal Sāstri Nene.

No. 5. Kāvya prakāśa dīpikā (Part II) ( काव्यप्रकाशदीपिका ), [ अलङ्कार ], by S'ri Chaṇḍīdāsa.
Edited by Pt. S'ivaprasāda Bhaṭṭāchāry, M. A,

No. 6. Nṛsimhaprasada-Pratisthasāra ( नृसिंहप्रसादः-प्रतिष्ठासार ) [ धर्म्मशास्त्र ]

No. 7. Tattva Chintamaṇi ( तत्त्वचिन्तामणि ) [ न्याय ], with Commentaries called Pragalbhi, Āloka Darpaṇa and Kantakoddhāra.

No. 8 Nyāyāmṛta Saurabha ( न्यायामृतसौरभ ) [ माध्ववेदान्त ], by Vanamāli Misra
Edited by Pt. Nrisimhāchārya.

No. 10. Kālatattvavivechana ( Part III ) (कालतत्त्वविवेचन) [धर्मशास्त्र] by Raghunātha Bhaṭṭa.
Edited by Pt. Nanda kishoıa Sharma.

No. 11. Skanda S'ārirakam ( स्कन्दशारीरकम् ) [ सामुद्रिक ]

No. 12. Siddhānta Sārvabhauma ( Part III ) ( सिद्धान्तसार्वभौम ), [ ज्यौतिष ], by Munīśvara.
Edited by Pt. Murlidhara Thakkur.

## THE PRINCESS OF WALES' SARASVATI BHAVANA STUDIES:

Vols. I to IX, Edited by

Mahāmahopādhyāya Pandit Gopinath Kaviraj, M. A,

Present Editor

Dr. M. D. Shastri, M. A, D. Phil. (Oxon)

**Principal, Sanskrit College, Benares.**

Vol I—

(a) Studies in Hindu Law (1): Its Evolution, by Gaṅgānātha Jhā.

(b) The View-point of Nyāya Vaiśeṣika Philosophy, by Gopinath Kaviraj.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 1-12

Vol. II—

(a) Paraśurāma Miśra alias Vāṇī Rasāla Rāya, by Gopinath Kaviraj.

(b) Index to S'ābara's Bhāṣya, by the late Col. G. A. Jacob

(c) Studies in Hindu Law (2):—its sources, by Gaṅgānāth Jha

(d) A new Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha S'armā.

(h) A seventeenth Century Astrolabe, by Padmākara Dvivedi.

(i) Some Aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj

(j) Nyāya Kusumāñjali (English Translation), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇa S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the Late Col. G. A. Jacob.

(b) Studies in Hindu Law (3): Judicial Procedure: by Gaṅgānātha Jha.

THE PRINCESS OF WALES'
SĀRASVATI BHAVANA STUDIES
( SANSKRIT )

# SĀRASVATĀLŌKA

Edited by

M. M. GOPINATH KAVIRAJ, M. A

Kiran 1 ( In progress )

(a) Mangalam, etc, by Nārāyaṇa S'āstri Khiste.

(b) Mimansaka mata saṃgraha, by Haranchandra Bhaṭṭāchārya

(c) S'rimad Ācharya Mandana Miśra by Chinna Swami S'astri.

(d) Bhagavato Buddhasya Charitram Upadeśaścha, by Gopinatha Kaviraj.

Kirana I ( Supplement )

Sanskrit Kavi Parichaya-(Bhāravi) by Nanda Kishore S'armā.

Rs. 1-4

Kirana II ( In progress )

(a) S'āradā Prasādanam by Nārâyāna S'āstri Khiste.

(b) Chūḍāmaṇi Darśanam by S'aśadhara Tarkachūḍāmaṇi,

To be had of
The Superintendent, Government Press,
ALLAHABAD, U. P.